# मुक्तधारा-वार्तागृहम्

कविगुरु-रवीन्द्रनाथविरचित-वङ्गभाषात्मक-नाटकस्य संस्कृतानुकल्पनम्

अनुकल्पकः

आचार्यः-डः श्रीध्यानेश-नारायण-चक्रवर्ती, एम्-ए, पि-एइच्-डि,
शास्त्री, वाणीकण्ठः भक्तिरत्नः, वाचस्पतिः, प्रज्ञाभारती

कलिकाता-रवीन्द्रभारती-विश्वविद्यालये संस्कृतविभागस्य
रवीन्द्रसाहित्यस्य च प्राध्यापकः ;
श्रीश्रीसीतारामदासोंकारनाथ-संस्कृत-प्रज्ञा-महाविहारस्य कुलपतिः

# MUKTA DHĀRĀ—VĀRTĀGṚHAM

**Sanskrit rendering of the Bengali dramas of the Great Poet Tagore**

**By**

**Dr. Dhyanesh Narayan Chakrabarti**

M.A., Ph.D, ŚĀSTRĪ, Vāṇikaṇṭha, Bhaktiratna, Vācaspati, Prajñābhāratī
Calcutta University Gangamani Medalist.

Senior Reader, Sanskritic Studies & Rabindra Literature,
Rabindra Bharati University, Calcutta ;
Cultural Secretary, Sanskrit Sahitya Parisat, Calcutta.
Director, Sri Sri Sitaramadasa Omkaranatha
Saṃskṛta Prajñāmahāvihāra,
Calcutta.

CALCUTTA

1988.

# मुक्तधारा-वार्तागृहम्

कविगुरु-रवीन्द्रनाथविरचित-वङ्गभाषात्मक-नाटकस्य संस्कृतानुकल्पनम्


अनुकल्पकः

आचार्यः-डः श्रीध्यानेश-नारायण-चक्रवर्ती, एम्-ए, पि-एइच्-डि,
शास्त्री, वाणीकण्ठः भक्तिरत्नः, वाचस्पतिः, प्रज्ञाभारती

कलिकाता-रवीन्द्रभारती-विश्वविद्यालये संस्कृतविभागस्य
रवीन्द्रसाहित्यस्य च प्राध्यापकः ;
श्रीश्रीसीतारामदासोंकारनाथ-संस्कृत-प्रज्ञा-महाविहारस्य कुलपतिः


# MUKTA DHĀRĀ—VĀRTĀGṚHAM

**Sanskrit rendering of the Bengali dramas of the Great Poet Tagore**


**By**

**Dr. Dhyanesh Narayan Chakrabarti**

M.A., Ph.D. ŚĀSTRĪ, Vāṇikaṇṭha, Bhaktiratna, Vācaspati, Prajñābhāratī
Calcutta University Gangamani Medalist.

Senior Reader, Sanskritic Studies & Rabindra Literature,
Rabindra Bharati University, Calcutta ;
Cultural Secretary, Sanskrit Sahitya Parisat, Calcutta.

Director, Sri Sri Sitaramadasa Omkaranatha
Saṃskṛta Prajñāmahāvihāra,
Calcutta.



CALCUTTA

1988.

निबन्धकेन डः रमेशचन्द्र मित्रेण
रवीन्द्रभारती विश्वविद्यालयात् प्रकाशितोऽयं ग्रन्थः



*Published by*

**Dr. Ramesh Chandra Mitra**
*Registrar,*
Rabindra Bharati University
56/A—B. T. Road
Calcutta-700 050
West Bengal.
INDIA

मूल्यम्—६०·००

Price—60·00

प्राप्तिस्थानम्
जिज्ञासा
१/१, कलेज रो
कलिकाता—९
१३३, रासविहारी एभेन्यु
कलिकाता—२९

फिरमा के एल् एम् (प्राइभेट) लिः
२बि, बि. बि गाङ्गुली ष्ट्रीट्
कलिकाता—१२

*Can be had from* :
JIJNĀSĀ
1/1 College Row
Calcutta-9.
133, Rashbehari Avenue,
Calcutta-29.

Firma KLM (Private) Ltd.
2B, B. B. Ganguli Street,
Calcutta-12



*Printed by*
**Modern Printers**
12, Ultadanga Main Road,
Calcutta-67.

## रवीन्द्रप्रशस्तिः

ज्योतिर्जित्वरमुत्सृजञ्जगदिदं कर्मण्यभिप्रेरयन्
जाड्यं जर्जरयंस्तमांसि तिरयन् सर्वं समुद्दीपयन् ।
पाप्मानं विनिपातयन् प्रतिपदं भद्रं समुद्भासयन्
भूयादभ्युदयो रवेरविरतं विश्वस्य भव्यं वहन् ॥

भेदो यस्य न वस्तुतोऽस्ति भुवने प्राची प्रतीचीति वा
मित्रत्वं प्रकटीकृतञ्च सततं येनात्मनः कर्मणा ।
विश्वं यस्य पदं प्रसिद्धमनिशं सत्ये च यस्य स्थितिर्-
भूयात्तस्य जयो रवेरविरतं तेनास्तु तृप्तं जगत् ॥

पञ्चत्रिंशदुत्तरत्रयोदश-वङ्गाब्दीयसौरवैशाखस्य पञ्चविंशदिवसे
रवीन्द्रजन्मोत्सवमुपलक्ष्य विश्वभारतीसम्मिलनीपक्षतो
मुद्रितं प्रकाशितञ्च श्लोकद्वयम् ।

कविसार्वभौमस्यान्तिम-जन्मोत्सवे गृहीतं चित्रम्

कविसार्वभौमस्यान्तिम-जन्मोत्सवे गृहीतं चित्रम्

## PRELUDE

At last by the grace of The Almighty, Tagore's drama in the garb of Sanskrit has been published again. On the occassion of Tagore-centenary, this humble self translated in Sanskrit two play-lets of Tagore along with some other works which were highly appreciated by the scholars, press and public. These plays, presented on stage and broadcast over, elated the audience in the country and abroad. As the works are now not available The Ravindra Bharati University, with which I am connected since the inception, has now published the same in response to the request from various quarters.

My first love is Sanskrit along with the works of Tagore, the great poet which led me to this noble task. I cannot but express my gratitude to all the scholars who warmly received the first publication with their good wishes and favourable opinions, some of which are annexed. Both the past and present Vice-Chancellors of mine, Prof. Dr. Ramaranjan Mukhopadhyaya and Prof. Dr. Bhavatosh Chattopadhyaya, who are connoisseurs of scholarship, blest this publication with their valuable preface and fore-word for which I am grateful to them. I am also grateful to Prof. Dr. Krishnanath Chattopadhyaya, my senior in the academic fraternity and Dean of the faculty of Arts, Dr. Ramesh Chandra Mitra, Registrar of the University and Sm. Sivani Chattopadhyaya, the able Superintendent of Publication and Sri Gaur Pal of Modern Printers for their sincere co-operation. Prof. Siddhesvar Chattopadhyaya, retired Head of the Deptt. of Sanskrit and Prof. Dr. Pratap Vandyopadhyaya of the University of Burdwan kindly went through the manuscript, whose suggestions adore the edition for which I remain indebted to them. Sm. Usha Devi Chakrabarti M.A.B.T., my wife, and Sri Nirmalyanarayan Chakrabarti Darshan

Shāstrī, M.A., Cert-in-German & French, my only issue, constantly kept me fit for this effort.

With tears I remember the encouragement of Kaviśekhara Viśveśvara Vidyābhūṣaṇa and Mahāmāyā Devī, my late lamented parents and Late Saumyendra Nath Tagore, the renowned cultural and political leader and one of my best well-wishers in this task who are no more in this mortal world to witness the 2nd edition. With grave grief I remember late Prof. Dr. Gopikamohan Bhattacharya and late Prof. Sm. Nandini Sadhu who made a very appreciative presentation of the plays by their efficient and attractive role. It is my solemn duty to remember late Sm. Madhuri Mukhopadhyaya Sura-Sarasvati, the consort of Ācārya Dr. Govindagopala Mukhopadhyaya, who used to keep the audience spell-bound by her divine tune to the songs of Tagore, translated by the humble self in the divine language. I acknowledge my sincere gratitude to all the participants on stage and Radio on various occasions and to the appreciators ranging from late Dr. S. Radhakrishnan, the President of India to my students past and present. It may not be irrelevant to remember that more than hundred times these plays in Sanskrit were staged and broadcast over with grand success and greeted with applause. I simply pray—"Let these plays of Tagore in Sanskrit shine at home and abroad for the pleasure of the readers imbibed with aesthetic sense.

रसिकानां विनोदार्थं
रवीन्द्रनाटकद्वयम् ।
संस्कृतेन विराजतां
गेहे विश्वे निरन्तरम् ॥

Dhyanesh Narayan Chakaabarti

127th Ravindra Jayanti
8th May, 1988
"Rishi Dham", P.O. Dattapukur
Dt. North 24 Parganas. Pin-743248
West Bengal, India.

# प्राक्कथनम्

सुदीर्घकालादनन्तरं पूर्णतां गतो मे बहुदिवसप्रोषितो मनोरथः। प्रकाशं गत संस्कृतभाषामयं नाटिकाद्वयं "मुक्तधारा-वार्तागृहम्"॥ कवीन्द्रेण रवीन्द्रेण वङ्गभाषया रचिता नाटिका कविकुलकिंकरेण सुरभारती-सेवकाधमेन मया संस्कृतभाषया चानुकल्पिता। संस्कृतप्रणयिनां तथा सहृदय-रसिकानाञ्च सन्तोषविधानार्थं, निखिले जगतीतले वङ्गभाषानभिज्ञानां संस्कृतविदां रवीन्द्रसाहित्यपाठजनितानन्दसन्दोहजननार्थमधुना खलु नाटिका-द्वयं सामाजिकानां पुरतः श्रद्धया निवेद्यते।

मम पितृचरणानामनुवर्तनेनाशैवं सारस्वतसेवायां निरतोऽहं सुरभारत्या वङ्गभारत्याश्चानुपम-माधुर्यरसेन सुतरामभिषिक्तः। परञ्चेदानीन्तनकवि-कुलललामभूतः कविसार्वभौमो रवीन्द्रनाथः शाश्वतभारतीयसंस्कृतेः प्रमूर्तो विग्रह इति मे प्रतिभाति। नवनवोन्मेषशालिनी या खलु सारस्वती प्रज्ञा, तस्या लोकोत्तरप्रतिभायास्त्वधिकारी रवीन्द्रनाथः। प्रतिभायाश्चैतस्याः, विकाशे गीर्वाणवाण्या अन्तहीनमवदानं संलक्ष्यते। संस्कृतसाहित्यस्य सरसभूमौ हि प्रोथितं रवीन्द्रसाहित्यरूपिणः कल्पतरोर्मूलम्। सार्थको-पाधिकस्य महर्षेः पितुः शिक्षया दीक्षया च तस्य कैशोरं चित्तमुपनिषदो भावादर्शेन जीवनप्रभात एव समुद्बुद्धमासीत्। द्विजेन्द्रनाथ-सत्येन्द्रनाथ-ज्योतिरिन्द्रनाथ-प्रमुखाणां महामनस्विनामग्रजानामकुण्ठसंस्कृतसाहित्यज्ञानेन च तरुणे वयस्येवासौ कविः प्रभावितः। तस्य सुदीर्घजीवनास्तृत-ज्ञान-कर्मसाधनायां सदैव संलक्ष्यते संस्कृतभाषायाः संस्कृतकाव्यस्य च घनिष्ठः संयोगः। ऊनविंशशतके यद्यपि स आविर्बभूव, तथापि संस्कृतसाहित्यस्य वैदिके तथा पौराणिके युगे विहरति तस्य सौन्दर्यसन्धायि कविचेतः। भावादर्शेन रवीन्द्रनाथो वैदिकानामृषीणां सगोत्रः, रूपकल्पनेन च संस्कृत-पौराणिक-कवीनां स खलु सतीर्थः। उपनिषद अध्यात्मसम्पन्निचयेन, रामायण-महाभारतयोः समुदार-चरित्र-चित्रणेन, अमरु-भर्तृहरिप्रमुखाणां सुकुमारशृङ्गारसज्जया, कादम्बरी-हर्षचरितयोः प्रसन्नगम्भीर-रचनाशैल्या— तथा निखिल-संस्कृत-साहित्यस्योदात्त-महिम्ना मधुर-सौकुमार्येण च स खलु चिरमेव मुग्धः प्रबुद्धश्चासीत्। किमधिकं तस्य गद्यपद्यानां

वाग्विन्यासः प्रायशस्तेन साकं कालिदासस्य सातिशयं परिचयमावहति। अतो ये खलु वैदेशिकपण्डितमूर्धन्याः काव्यरसिकाश्च रवीन्द्रनाथं साग्रहं समादृतवन्तस्ते खल्वासन् सर्वं एव प्रायः संस्कृतविद्यानिष्णाताः भिंटारनिज्-सिल्भ्यांलेभि-लेस्नि-नर्मान्ब्राउन्-प्रमुखाः। प्राच्यविद्यानिष्णाताः पण्डित-प्रकाण्डाः रवीन्द्रकाव्ये परिचितसंस्कृतनिष्ठप्रियस्वराणामालपनमाकर्ण्य-रवीन्द्रसाहित्यसमादरे पुरोयायिनः सञ्जाताः। प्रसङ्गेऽस्मिन् रवीन्द्रनाथस्य सप्ततितमवर्षपूर्तिमुपलक्ष्य पाश्चात्यमनीषिणा शैलकण्ठभट्टेन (Prof. Sten Konow) विरचितः श्रद्धाञ्जलिः सदैव स्मरणीयः—

"It was an Indian poet who at last opened the eyes of the West. Through William Jones' translation of Kalidasa's Sakuntala Europe came to know something about India's soul, about the ideals, the aims, and the aspirations of the people of India. And this led to a keen interest in India, her history and civilisation.

It was, however, chiefly ancient India which attracted the interest of the west. Kalidasa was the poet, and the ancient seers and thinkers were the last and noblest product of India's genius.

Even when modern Indians come to play a role in the spiritual development of the West, it was chiefly as interpreters of the wisdom of the past that they were greeted and admired.

Then came the day when another Indian poet conquered the West. This time it was not one of by-gone times, but one who lived and sung in modern India, whose tune was that of the Indian landscape, the Indian river, the Indian forest and the Indian village of today.

Again the West listened and marvelled. *It found the same authentic beauty, the same sublime flight of thought as in Kalidasa's immortal works : the old spirit was still alive.* (The Golden Book of Tagore. Page. 130.)

संस्कृताश्रितस्य यस्य खलु भावादर्शस्य गुणग्राही आसीदसौ पण्डितवर्यस्तमेव भावादर्शं रवीन्द्रमानसे दृष्ट्वा स नितरां श्रद्धाप्लुतः सञ्जातः। ईशवीयैकत्रिंशदुत्तरोनविंशशतकस्य सेप्टेम्बरमासस्य विंशदिवसे वङ्गप्रान्तीयसंस्कृत-पण्डिताः "कलिकाता-राष्ट्रिय-संस्कृत-महाविद्यालये" 'कविसार्वभौम' इत्युपाधिना रवीन्द्रनाथं संवर्धयामासुः। संस्कृत-शिक्षां विना भारतीयानां मातृभाषाशिक्षा व्यर्थतां गमिष्यतीति विचिन्त्यायं महाकविस्तत्प्रतिष्ठितविश्वभारती-विश्वविद्यालये स्वयमेव छात्रान् प्रथमतः संस्कृतभाषां पाठितवान्। विश्वविद्यालयेऽस्मिन् महामहोपाध्याय-विधुशेखरशास्त्रि-देशिकोत्तम क्षितिमोहनशास्त्रि-महोदयप्रमुखाः प्रायः सर्वे शिक्षकाः संस्कृतनिष्णाता आसन्। तत्र हि उपनिषन्मन्त्रोच्चारणेन छात्राणां दिवसारम्भो जातः। सर्वभारतीयक्षेत्रे संस्कृतभाषाव्यवहार एव आसीत्तस्य प्रवणता। यदा तु चैनिकसांस्कृतिकप्रतिनिधयः शान्तिनिकेतनमागतास्तदा संवर्धनासभाया अनुष्ठानानि संस्कृतभाषयैव रवीन्द्रनाथः परिचालितवान्। महापण्डितस्य भिण्टारनिज्महोदयस्यापि संवर्धनासभा संस्कृतेनैव निर्वाहिता। तदा तु "अभिज्ञानशकुन्तल"मिति नाटकस्य अभिनयोऽपि विहितः। ईशवीय-चत्वारिंशदुत्तरोनविंशशतके उक्षतीर्थविश्वविद्यालयपक्षतः (Oxford University) सम्मानात्मकसाहित्याचार्येत्युपाधिग्रहणकाले (D. Litt.) "भारतीयकविः" रवीन्द्रनाथ शाश्वताखण्डभारतीयसंस्कृतेः धात्रीस्वरूपया संस्कृतभाषयैव समावर्तनप्रतिभाषणं प्रदत्तवान्। भट्टवाणस्य गद्यरीत्या सुरचितं तस्य गीर्वाणवाणीमयं भाषणमांगलं प्रतिरूपञ्च विपश्चितां तृप्तये समुद्ध्रियेते।—

"भवन्त उक्षतीर्थ-विश्वविद्यालय-प्रतिभुवः!

एषोऽस्मि कश्चित् कविर्भारतवर्षस्य। तं मां सम्भावयन्ती सा किल भवतां प्रत्ना विद्याभूमिर्नूनमात्मनो मानवधर्माम्नायमेव महान्तमाविष्कर्तुम् ईहते यस्य खल्वर्थः साम्प्रतमतितरां गम्भीरश्च अनतिपात्यश्च संवृत्तः। गर्वोत्तानं मे चित्तं प्रतिपद्यास्य वाचिकं प्रतिपत्तिं चैतां प्रहितां प्रतीकमिव अनश्वरं मानवधर्मात्मनः। सभाजयामि भवतोऽत्र शान्तिनिकेतने। यदेतदनर्घमुपायनमानीतं भवद्भिर्मदर्थं मद्देशार्थञ्च, चिरं तदवस्थास्यते अस्मद्हृदयेषु, सम्पत्स्यते च तद् भवतामस्माकञ्च साधारण-संस्कृति-सम्पत्तय इति प्रतियन्तु भवन्तः।

स खल्वयं कालः प्रवर्धते यत्राङ्कः। तिरोधत्ते गुणः। प्रसरति अशिष्टत्वं निरङ्कुशम्। प्रवर्तते च पशूचिता स्पृहा भोगे समुपचीयमाना भूतविद्यया।

अस्मिन् हि व्यतिकरे कस्यापि भुवनव्यापिनः सम्बन्धस्य बीजसमुद्-गमोक्तिर्नाम कदाचित् कविजनोचितेव प्रतीयते। तथापि तु संयस्यते कालस्तर्जयन्नपि निरन्तरम्। किञ्च ये नाम वयम् अतीत्याप्येनं जीवामः प्रतीमश्च यदार्यधर्मश्चरमार्थसम्पत्तये वर्धतैव नित्यमिति तैरस्माभिः सेयं प्रतीतिरवश्यं प्रत्यग्रीकरणया।

क्षेमं वतेदं निमित्तं कस्याप्यनागतस्य समयस्येति प्रतिगृह्यते मयैषा प्रतिपत्तिर्विहिता उत्ततीर्थविश्वविद्यालयेन। नूनं न जीविष्यास्यहम् अवलोक-यितुमेनं प्रतिष्ठितम्।

सभाजनीयस्त्वेष तस्य सप्रणयः सङ्केतः सङ्गरः इव दिवसानां प्रशस्यतराणा-मिति शिवम्।

शान्तिनिकेतनम्

शकाब्दाः १८६१-४-२२ रवीन्द्रनाथठाकुरः"

कविगुरुकृतमाङ्गलप्रतिरूपम्—

"Delegates from Oxford University,

In honouring me, an Indian poet, your ancient seat of learning has chosen to express its great tradition of humanity. This tradition, to day has acquired a deeper and more pressing significance. I feel poud to accept its message, and the recognition it conveys, as a symbol of the undying spirit of man. I welcome you here at Santiniketan, and I assure you that this friendly gift that you have brought to me and to my country, will remain in our hearts and bid us stand together for the common cause of civilisation.

In an era of mounting anguish and vanishing worth, when disaster is fast overtaking countries and continents with savagery let loose and brutal thirst for possession

augmented by science, it may sound merely poetic to speak of an emerging principle of world-wide relationship. But, Times violence, however immediately threatening, is circumscribed, and we who live beyond it and dwell also in the larger reality of Time, must renew our faith in the perennial growth of civilisation toward an ultimate purpose.

I accept this recognition from Oxford University as a happy augury of an Age to come and though I shall not live to see it established, let me welcome this friendly gesture as a promise of better days."

अतः, संस्कृतभाषायाः साहित्यस्य च भावसम्पद्भिः सुसमृद्धं यद् वङ्गभाषामयं रवीन्द्रसाहित्यं तस्यानुवादविषये संस्कृतभाषैव योग्यतमा भाषा। भावादर्शस्य ऐक्यात्, रूपकल्पनस्य च सादृश्यात् साहित्यस्यास्य मौलिकभाव-सम्पदः संस्कृतेनैव सुरक्षिता भविष्यन्ति। अतः खलु रवीन्द्रनाटकस्य संस्कृतानुवादे मे प्रयासः।

किञ्च, रवीन्द्रसाहित्यस्य संस्कृतानुवादेन सिध्यत्यपरमपि सुमहत् प्रयोजनम्। तत्तु, निखिले भारते सर्वेषां जनानामैक्य-संविधानं तथा भावगतसंहतिसाधनम्। सुप्राचीनकालादारभ्य सामग्रिकभारतीयसंस्कृतेः केवलमेकैव धात्रीयं विज्ञानसम्मता सुरभाषा। भाषामिमामाश्रित्य प्रतियुगमेव भारतीयप्रज्ञायाः विचित्रः प्रकाशो नवनवरूपेण लीलायितः। अस्मिन् प्रसङ्गे सुविख्यातफारासिकमनीषिणो डाः लूइ् रेणो महोदयस्योक्तिः-स्मरणीया।—

"There is no living cult[illegible]ure without a living tradition. If India is belove[illegible]d and cherished among the elite of the west [illegible], it is on accouut of her traditional culture. And this culture is embeded above all in the treasures of Sanskrit. Sanskrit and India are inseparably connected inspite of all the transitory harangues of the politicians."

(Dr. Louis Renou, Paris University.)

मोक्षमूलरप्रमुखाणां पण्डितप्रकाण्डानां सदुक्तयोऽपि स्मरणीयाः। उपमहादेशेऽस्मिन् निखिले भारते विराजते एकैवाखण्डा संस्कृतिः। सा तु संस्कृतभाषाश्रिता। यद्यप्यधुनातन-भारतीया विभिन्नभाषाभाषिणस्तथापि तेषां सर्वेषामैतिह्यन्तु एकमेव पुनः संस्कृतभाषाश्रितं च। हिन्दीभाषा, वङ्गभाषा, तामिलभाषा, अन्या या काऽपि वा इदानीन्तनी भाषा भवतु, सा त्वेव प्राधान्येन प्रदेशविशेषे प्रचलिता सीमिता च। अतस्तासां नास्ति सर्व-भारतीयमावेदनम्। संस्कृतमेव विभिन्नभाषाभाषिणां विभिन्न-देशवासिनां भारतीयानां स्वाभाविकं बन्धनसूत्रम्। केवलं संस्कृतभाषायामेव वर्तते सर्वभारतीयमावेदनम्। अतः प्राचीनकालादारभ्य ये खलु महात्मनो निखिले भारते भावधाराप्रचारार्थं वहिर्गतवन्तस्ते सर्वे भाषणकाले संस्कृतमेव आश्रितवन्तः। केरलदेशोद्भूत भगवान् श्रीमच्छङ्कराचार्यो वङ्गदेशसमुद्भूतो भगवान् श्रीकृष्णचैतन्यश्चाखिले भारते तयोर्धर्मप्रचारणे संस्कृतमेवा-वलम्बितवन्तौ, न तु प्रादेशिकीं भाषाम्। उनविंशशतके महात्मा राजा राममोहन-रायमहोदयो, विंशशतके दयानन्द-सरस्वती, श्रीमत् सीताराम दास ओंकारनाथ प्रमुखाः मनस्विनः संस्कृतमेवाश्रित्य सर्वभारते तेषां नवीनादर्शं प्रचारितवन्तः। अनया सर्वभारतीयभाषास्वरूपया संस्कृतभाषया यदि रवीन्द्रसाहित्यस्यास्य अनुवादः क्रियते, तदा सर्व एव भारतीयाः अधिकभावेन अस्य साहित्यस्य रसं ग्रहीतुं शक्ष्यन्ति, जातीयसंहतिश्च सुदृढा सम्भविष्यत्यचिरकालेनैव।

अतः खलु रवीन्द्रसाहित्यस्य संस्कृतानुवादे समायं प्रयासः। विशेषतः, ईशवीयैकषष्ठ्युत्तरे[illegible]विंशशतके रवीन्द्रजन्मशतवर्षपूर्तिमहोत्सवो निखिले विश्वे सर्वत्रैवायोजितः। एतदुप[illegible]स्य उत्सवात् कति वर्षेभ्यः प्रागूरवीन्द्र-रचनानां संस्कृतानुवादे आत्मानमहं निया[illegible]वान्। एतद्विषये कवि-[illegible]: सौम्यदर्शन-सार्वभौम-भ्रातुष्पौत्रस्य विदग्धस्य रसवेत्तुः प्रख्यातदेशहितव्रात[illegible]-सौम्यभाषि-श्रीयुक्त-सौम्येन्द्रनाथ -ठाकुर-महोदयस्य न केवलं प्रेरणा ताडन-ऽपि मया सकृतज्ञं संस्मर्यते। प्रथमतो मया रवीन्द्रनाथविरचितं "डाकघर" इति सुविख्यात-नाटकं "वार्तागृहम्" इति नाम्ना संस्कृतेनानुकल्पितम्। तत्तु "कलिकाता-केन्द्रीय-नागरिक-समिति"-प्रयोजिते रवीन्द्रजन्मशतवार्षिक-

महोत्सवे महता समारोहेण कलिकातायां "संस्कृत-साहित्य-परिषत्"सदस्यै-रभिनीतं रसिकैः सामाजिकैश्चाभिनन्दितम्। तदनन्तरम् "अखिल-भारतीय-संस्कृत-साहित्य-सम्मेलन"स्य षड्विंशाधिवेशनस्य प्रथमे दिवसे स्वर्गत केन्द्रीय-मन्त्रिणः वलवन्त-नागेश-दातार-महोदयस्य साभापत्येन, कलिकाता-"संस्कृत-साहित्य-परिषदः" षट्चत्वारिंशत्तम-वार्षिकोत्सवे केन्द्रीय-संस्कृति-मन्त्रि-डाः हुमायुन्कवीर-महोदयस्य च पौरोहित्येन, कलिकाता "आकाश-वाणीकेन्द्रे" च वहुशो नाटकमिदमभिनीतं समभिनन्दितञ्च विद्वद्भिः। एतद् "वार्तागृहम्" भारतसर्वकारेण प्रकाशनार्थं गृहीतम। भारतसर्वकारेण साहित्य-आकादेमीतः प्रकाशिते "संस्कृतरवीन्द्रम्" इति ग्रन्थे वार्तागृहम् सन्निविष्टम्। अनेनोत्साहं संप्राप्य मया "मुक्तधारा"-नाम्नी विख्यात-नाटिका पुनरनूदिता, कलिकाता-"संस्कृत-साहित्य-परिषत्" पत्रिकायाञ्च धारावाहिकक्रमेण प्रकाशिता। साऽपि गुणग्राहिणां प्रोत्साहनात् ग्रन्थरूपेण प्राकाश्यं नीता। पण्डितकुलधुरन्धर-डः वेङ्कटेश-राघवन् महोदयेनानुरुद्धः रवीन्द्रनाथस्यानुपम-क्षुद्राख्यानानामपि संस्कृतानुवादं कृत्वा प्रकाशनार्थं तत् सकाशमेवाऽहं प्रेषितवान्। "कलिकाता-संस्कृत-साहित्य-परिषत्-पत्रिकायाः" "रवीन्द्रसंख्या" तु रवीन्द्ररचनानां संस्कृतानुवादैरतीव समृद्धा।

भवतु, अस्मिन् महति कर्मणि मम प्रवेशो नाऽभविष्यद् यदि कतिचिन्-महान्तो मां स्निग्धदृष्ट्या सहायतां नाऽकरिष्यन्। प्रथमतो मम परमाराध्यः पितृदेवः कविशेखरः श्रीयुक्त-विश्वेश्वर-विद्याभूषण काव्यतीर्थ-काव्यरत्न-महोदयो न केवलं मम जन्मदाता, अपि तु शिक्षादाता, मम सारस्वतसाधनायाञ्च दीक्षादाता। अस्मिन्ननुवादे यदि कुत्रापि गुणा दृश्यन्ते, तास्तु तस्यैव; दोषास्तु सर्वे ममैव मूर्खताप्रसूताः—इति ध्रुवमेव। मम मातृदेवीनां श्रीयुक्तानां महामाया-देवीनां शुभप्रेरणा चास्मिन् कर्मणि सदैव स्मर्यते। पुनर्मम सहधर्मिणीनां राजनीतिविज्ञाने "एम्-ए" इत्युपाधिधारिणीनामपि श्रीमतीनाम् ऊषा-देवीनामान्तरिकी सहायता संस्कृतग्रन्थप्रकाशरूप-कर्मण्यस्मिन् संलब्धा। दर्शनशास्त्रे एम्-ए तथा जार्मान्-फ्रेञ्च-प्रभृतिषु भाषास्वपि उपाधिधारिणा। तनयस्य मे श्रीमती निर्माल्य नारायणचक्रवर्तिनः कर्मण्यस्मिन् सेवा ·· र्यते।

कविवर्यस्य रवीन्द्रनाथस्य भ्रातुष्पौत्रः कर्मज्ञानसमन्वयैकमूर्तिः सार्थक-नामा श्रीयुक्त-सौम्येन्द्रनाथ-ठाकुर-महोदयो ग्रन्थस्यास्य भूमिकां विरचय्य मां कृतार्थीकृतवान्। रवीन्द्रसाहित्यविश्लेषणे तस्य दाक्ष्यं जगत्यतुलनीयम्। वरेण्याय तस्मै महात्मने निवेद्यते मया भक्तिविनम्रा श्रद्धा।

ग्रन्थस्यास्य प्रकाशनमभिलक्ष्य भारतसंघस्य महामान्य-प्राक्तन-राष्ट्रपतीनां प्रतिभाप्रोद्भासितदिङ्मण्डलानां विश्ववरेण्य-दार्शनिक-वर्याणां परमाचार्य-श्रीयुक्त-सर्वपल्ली-राधाकृष्ण-सर्वागमसार्वभौम-महोदयानामाशीर्वचनं संलभ्य यातोऽहं कृतार्थगणनम्। भारतीय-संस्कृतेस्तेभ्यो मूर्तविग्रहेभ्यो निवेद्यते मया सबहुमानः श्रद्धा-प्रसूणाञ्जलिः।

ज्ञानकर्मभक्तीनां त्रिवेणीसंगमो यस्य मानसक्षेत्रं भूषयति, कविसार्व-भौमस्य रवीन्द्रनाथस्य भावादर्शप्रचारणे यः खलु योग्यतमो नायकः, प्रशासकः यः खलु सिद्धः सारस्वतः, रवीन्द्रभारती-विश्वविद्यालयस्य माननीयो भूतपूर्वोपकुलपतिः श्रीयुक्त-हिरण्मय-वन्द्योपाध्याय-आइ-सि-एस्-महोदयो खल्वासीत् मयि सन्तत-स्नेहशीलः। एतन्महति कर्मणि शुभकामनां विज्ञाप्य तत्रभवान् मां कृतार्थी कृतवान्। एतेभ्यो मनीषिभ्यो निवेद्यते मया कृतज्ञतामधुरा प्रणतिः।

येषां खलु महामनीषिणां संस्कृत-साहित्यसम्प्रचारे अकुण्ठसहयोगितां, कर्मण्यस्मिन् च गभीरं स्नेहपूतमाशीर्वचनञ्च संप्राप्य धन्योऽहं—तेभ्यो विश्वविख्यात-प्राच्यतत्त्वविद्भ्यो भाषाचार्येभ्यः श्रीयुक्त-सुनीति-कुमार-चट्टोपाध्याय एम्-ए, डि-लिट् (लण्डन, रोम) महोदयेभ्यः सविनयं समर्प्यते मम भक्तिकुसुमाञ्जलिः।

सारस्वतकुल-ललामभूतानां, पण्डितकुलधुरन्धराणां प्राच्यपाश्चात्त्य-विद्यार्णवपारंगतानामन्तेवासिषु स्नेहनिर्झरस्वरूपाणां कलिकाताविश्वविद्यालय-प्राक्तनाशुतोषाध्यापकानां नवनालन्दामहाविहारस्य शीलभद्रसदृशानां महाध्य-क्षपादानां मदीयाचार्यवर्याणां डः श्रीयुक्त सातकड़ि-मुखोपाध्याय एम्-ए, पि-एइच्-डि-महोदयाना-माशीर्वचनेन कृतकृत्योहं तेषां चरणकमलेषु प्रणमामि।

पण्डितमूर्धन्या ममाचार्यचरणा महामहोपाध्याय-श्रीयुक्त-कालीपद-तर्काचार्य-महोदयाश्चिरमेव मयि अमेयस्नेहपरायणाः। संस्कृतसाहित्यसंसदि अतुलनीयकीर्तिमतां सुरगुरुकल्पानामेतेषां पण्डितवर्याणां शुभाशंसनं संलभ्य कृतकृत्योहं सञ्जातः। तेषां चरणकमलेभ्यो नतमौलिरहं प्रणमामि।

सनातनधर्मादर्शस्य मूर्तविग्रहरूपाणां वर्तमान-संस्कृतसाहित्यजगति कालिदासकल्पानां मदीयाचार्यवर्याणां पण्डितराजानां श्रीयुक्त-श्रीजीव-न्यायतीर्थ-एम्-ए-डि-लिट्-महोदयानां प्रोत्साहनं मम जीवने दुर्लभा सम्पत्। तेषामाशीर्धन्येन मया तं महान्तमुद्दिश्य निवेद्यते कोटिशः प्रणामाञ्जलिः।

सुरभारतीसेवकोत्तमानां दिगन्त-विश्रान्त-कीर्तिमतां कलिकाता-विश्व-विद्यालय-प्राक्तन-प्राचार्यवर्याणां ममाध्यापकचरणानां पद्मभूषण-श्रीयुक्त-पट्टाभिरामशास्त्रि—शास्त्ररत्नाकर-विद्यासागर-पादानां सततस्नेहाशीर्वादं स्मरता मया तमुद्दिश्य निवेद्यते गणनारहितः प्रणामाञ्जलिः।

मम सारस्वताग्रजस्य अत्यागसहनबान्धवस्य कुरुक्षेत्र-भियेना-टरेण्टो-यादवपुरविश्वविद्यालय-प्राचार्यस्य दिवंगतस्य डक्टर्-श्रीगोपिकामोहन-भट्टाचार्य-एम्-ए, डि-फिल्, डेर्-फिल्-काव्यन्याय-तीर्थ-महोदयस्य अक्लान्तप्रचेष्टयैव ग्रन्थस्यास्य मुद्रणं प्रथमं सम्पादितम्। मयि तस्य स्निग्धं सुन्दरमानुकूल्यं सततमेव स्मर्यते, निवेद्यते च तस्मै प्रणयसमुज्ज्वला आन्तरिकी कृतज्ञता।

प्रसंगे चास्मिन् मम पूर्वतन-सहकर्मिणां रवीन्द्रभारतीविश्वविद्यालयस्य कलाविभागाध्यक्षाणां दिवंगतानां डक्टर्-श्रीयुक्त-साधन-कुमार-भट्टाचार्य-एम्-ए, डि-फिल्-महोदयानां, वंगभाषाविभागीयप्राचार्याणां डक्टर्-श्रीयुक्त-अजितकुमार-घोषवर्मन्-एम्-ए, डि-फिल्-डि-लिट्-महोदयानाञ्च प्रोत्साहनं संलभ्य तेभ्यो बहुशो धन्यवादाः प्रदीयन्ते।

शोभनेऽस्मिन्, कर्मणि ममाग्रजकल्पाः वर्धमानविश्वविद्यालय-प्राक्तन प्राचार्याः डः श्रीयुक्त-सिद्धेश्वर-चट्टोपाध्याय-एम्-ए, पि-एइच्-डि काव्यतीर्थ-महोदयाः, कलिकाताविश्वविद्यालयस्य भाषातत्त्वविभागध्यक्षाः डः श्रीयुक्त-

सत्यरञ्जन-वन्द्योपाध्याय-एम्-ए, पि-एइच्-डि-महाभागाः, खृष्टीय-महिला-महाविद्यालय-संस्कृताध्यक्षाः श्रीयुक्त-रवीन्द्रनाथ-भट्टाचार्य-एम्-ए, वेदान्त तीर्थ-महाभागाः, परिषत्सदस्याः श्रीयुक्त-शक्तिप्रसाद-मुखोपाध्यायमहोदयाः, परिषत्ग्रन्थागारिकाः श्रीयुक्त मधुसूदन-काव्यतीर्थ-महाभागाः, परिषद-ध्यापकाः श्रीयुक्त-रामधन-काव्य-व्याकरण-पुराणतीर्थ-शास्त्रि-महोदयाश्च नानाविधं साहाय्यं कृत्वा मम धन्यवादपात्रतां गताः।

वहुकालं यावदेतस्य नाटिकाद्वयस्य पुनःप्रकाशनार्थं विदग्धैः रसिकैः समनुरुद्धोऽहम्। नेदानीं लभ्यते प्रथमं संस्करणम्। अतो रवीन्द्रनामांकितस्य मे कर्मतीर्थस्य कुलपतीनां करुणावरुणालयानां सुदक्ष-सारस्वतप्रशासकप्रवराणां डः रमारंजन मुखोपाध्याय-एम्-ए, डि-लिट्-महोदयानामनुमत्या विश्वविद्यालयेन प्राकाश्यं नीयते ग्रन्थोऽयम्। तेभ्यो निवेद्यते हार्दिकी कृतज्ञता। वयसानुजोपि विद्ययाग्रजरूपो वर्धमानविश्वविद्यालयाध्यापक-प्रवरः डः प्रताप वन्द्योपाध्यायः एम्-ए, पि-एइच्-डि तथा देहली विश्वविद्या-लयस्य प्रवीणाध्यापकः ज्ञानभक्तिसमन्वयमूर्तिः डः श्रीवाचस्पति उपाध्यायः एम्-ए, पि-एहच्-डि मे संस्कृतानुकल्पनस्य पाण्डुलिपि-प्रणयने सहायतां कृत्वा धन्यवादभाजनं गतौ। कर्मण्यस्मिन् भारतराष्ट्रस्य महामान्य—वर्तमानीप-राष्ट्रपतीनां डः श्रीयुक्त शंकरदयाल शर्म-महोदयानां शुभाशंसनमुररीकृत्य-धन्योऽस्मि। विभिन्नेषु कालेषु नाटिकाद्वयस्य मञ्चेष्वभिनये कलिकाता-आकाशवाणीतश्च प्रसारणे वहवो मनीषिणो सारस्वताश्च ये अंशग्रहणं कृतवन्तः सर्वेभ्यस्तेभ्यो निवेद्यते मया हार्दिकी कृतज्ञता। अमलस्य भूमिकायां समभिनीय दिवंगताध्यापिका नन्दिनी साधु, संस्कृतसंगीतेषु च मधुकण्ठं प्रदाय सुरलोकप्रयाता सुरसरस्वती माधुरी मुखोपाध्याया देवी च निखिलान् सामाजिकान् सन्तोष्य मां धन्यीचक्रतुः। सरस्वत्याः वरपुत्रीद्वय-मूद्दिश्य क्रियते मया शोकाश्रुतर्पणम्।

*ग्रन्थस्यास्य प्रकाशने विश्वभारतीकर्तृपक्षस्य सानन्दानुमतिर्मया कृतज्ञता-पूर्वकं स्मर्यते।

* We are glad to communicate our approval to the publication of "Muktadhara" in Sanskrit by you... ............ (Letter No.—Per/5192—19th August, 1963 Visva Bharati, Publishing Dept. Calcutta.)

वङ्गीयमूलस्वरसंयोगेन सङ्गीतानामनुशीलन-सौकर्यार्थं सङ्गीतादौ वङ्ग-भाषायाश्छन्द एवानुसृतम्। सर्वविधस्खलनं सहृदयैः कृपया क्षन्तव्यमिति मे प्रार्थना।

अधुना येषां खलु संस्कृतप्रणयिनां सन्तोषाय, साहित्यरसिकानाञ्च सन्तृप्तये, रवीन्द्रकाव्यमधुपानाञ्च सम्मोदाय सुरवचसा रवीन्द्रकाव्यानुकल्पने क्षमताहीनस्य दीनस्य ममायं प्रयासस्तेषां सरसहृदयेषु यदि ग्रन्थस्यास्य पाठेनानन्दसन्दोहो जायते, तदैवाहं सार्थकप्रयत्नो भविष्यामि। अन्तत इदमेव मे वक्तव्यम्—

"आपरितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम्" इति शम्

सहृदयसेवकस्य श्री—ध्यानेश-नारायण चक्रवर्ति-देवशर्मणा।

१३६५ वङ्गाब्दीयसौरवैशाखस्य पञ्चविंशदिवसीयम्
शुभरवीन्द्रजन्मवासरीयम्
रवीन्द्र-भारती-विश्वविद्यालयः
५६ ए वि-टि रोड्
कलिकाता—५०

# समर्पणपत्रम्

येषां खलु महात्मनां जननान्तरसौहृद-सम्भूत-दाक्षिण्यं संलभ्य
कर्मजीवनं मे विकशितं, सारस्वतजीवनञ्च धन्यं जातम्,
येषां भागीरथीप्रतिमया करुणामृतधारया सदैवाहम-
भिषिक्तस्तेषामेव कुलपतिकल्प-महाचार्याणां प्रतिभा-
प्रोद्भासित-प्राच्य-प्रतीच्य-भुवनद्वयानां कलिकाता-
संस्कृतमहाविद्यालय-महाध्यक्षाणां तथा वाराणसेय
संस्कृत-विश्वविद्यालयस्य कुलपतीनां ज्ञान-
कर्म-भक्तिसमन्वयविग्रहाणां प्रज्वलित-
सनातनधर्मप्रदीपाणां

महाचार्य—डक्टर्-श्रीयुक्त-गौरीनाथ-भट्टाचार्य-शास्त्रि-
एम्-ए, पि-आर्-एस्, डि-लिट्, एफ्-ए-एस्, महोदयानां
कल्याणकरकमलेषु दीनस्यान्तेवासिनः सारस्वत-
श्रद्धार्घ्यरूपेण समर्पितोऽयं ग्रन्थः।

श्रीगौरीनाथ-शास्त्री मम गुरुपरमो ज्ञानशीलाभिरामः
नित्यस्नेहानुशीलः सुविमलचरितो देशविश्रान्तकीर्त्तिः।
यत्पादाम्भोजसंगात् सुचिरविलसितं सिद्धिमाप्तं व्रतं मे
तस्य श्रीपाणिपद्मे ससुखमुपहृता नाटिका काव्यधारा॥

# PREFACE

Professor Bhabatosh Chatterjee
M.A., Ph.D., D.Litt.
VICE-CHANCELLOR

RABINDRA BHARATI UNIVERSITY
56A Barrackpur Trunk Road
Calcutta 700 050
15 April 1988

In imaginative literature, words are a vehicle of sensations and associations and convey meanings beyond the literal/denotative meanings. This explains the difficulty in translation and it has been debated whether literature can be successfully translated into another language. It is true that the Bengali language has in the main its roots in Sanskrit, and the rendering of Bengali into Sanskrit is less difficult. However, the task assumes a special significance when the author is Rabindranath Tagore, who speaks in images and whose words are many-edged and the achievement of Dr Dhyanesh Narayan Chakrabarti is indeed commendable. He is scrupulously faithful to the original, but his Sanskrit has a happy felicity that gives his translation both lucidity and an incantatory rhythm. Dr Chakrabarti is well-known for his erudition, but he is a scholar with a difference: he is a teacher with a mission and has earned the gratitude of all Indians for whom the work of Tagore is a cherished heritage and who have some familiarity with Sanskrit that is aptly described as the language of the gods.

15 April 1988 S/d. Bhabatosh Chatterjee

## FOREWORD

There was a time when it was believed that it was not posssible to decipher the spirit of Tagore without ascertaining the treasures of Sanskrit, because Tagore inherited the traditions of Oriental Learning and the richness of Culture expressed by the Creative Compositions of Vedic Seers and thə grand Vālmīki and the great Vyāsa. Subsequent researches in the field of Tagore Studies have indicated the fact that the thoughts of Tagore constitute a reassertion of the Philosophies of Upaniṣads and the ideals envisaged in the creative mind of Vyāsa and Vālmīki in the context of contemporary situation in such a manner that it is not possible to catch the spirıt and Philosophy of ancient India without getting a first-hand acquaitance of Tagore's thoughts and ideas. This explains the necessity of rendering translations of the works of Tagore into various languages, including Sanskrit, which constitutes the repository of Indian Culture. Modern Mind has realised the truth that the Philosophy of universal understanding, mutual love and global fraternity, as propounded by Tagore constitutes the remedy of all evils of the present day society, which is marked by strays and torn by small bickerings of the craving soul The Clarion Call given to posterity by Tagore to implement the ideal of universal love by effecting expansion of ego-bounderies has now been accepted as the only way of fighting the evils of narrowness and the destructive forces that tend to keep the human being confined within the boundaries of earthly and small existence. This explains further the interest taken by modern man to dive deep into the ambassia of Tagore's writings and to experience the grandeur of his evershining Philosophy.

Though renderings of Tagore's writings into modern European and Indian Languages have been many, no serious attempt has yet been made to render these writings into Sanskrit so that lovers of oriental learning can have an easy access to them. The reason is obvious Whereas there are a number of scholars competent to translate the novels, dramas and poems of Tagore into various Indian and European languages, there are only a handful scholars of modern society, who havc the ompetence of translating these writings in to Sanskrit, 'aining all the time the spirit of Tagore. The work of ıslation itself is extremely difficult, in as much as, it not consist simply in giving equivalent expressions e expressions employed by the Artist in various ıages : the translator is required to instill the spirit ıe writings as well in the translation. Poetry, as a tter of fact, is a Gestalt, and it is not possible to take ıt even a single expression from the edifice of Poetry : this is done, tho Poet may appear as saying something which he does not want to say. When this is the case, the difficult nature of the translator's job becomes all the more clear, because the translation of a Poem or a Novel or a Drama is a separate artistic creation, retaining the spirit of the original and shining at the same time in the splendour of the objective correlative, newly inducted by the translator. Since the spirit of Tagore's writings is extremely abstruse, being philosophical in nature, particularly in his Dramas, most of which are allegorical in character, it is only with utmost care that his writings can be translated successfully.

Posterity is indebted to Professor Dhyaneshnarayan Chakrabarti of Rabindra Bharati University for very kindly coming forward to render the writings of Tagore into Sanskrit and to make them available to the lovers of Oriental learning. Himself a great scholar in Sanskrit

Professor Chakrabarti is one of those front-ranking lover of Sanskrit, who have been expanding their energy in popularising Sanskrit with the ultimate objective of maintaining Indian Culture and in projecting its richness to the future mankind. He has already translated a few Poems and Dramas of Tagore, and the appreciation which he has received from the scholarly world on this score is simply astounding. Professor Chakrabarti possesses a thorough grasp over Tagore's Philosophy and his total command over Sanskrit idioms and Expressions has made it possible for him to build a new creation, shining in its own splendour and enshining at the same time the grand philosophy of Tagore. Gifted with a grand sense of music he translates the songs of the original in such a manner that the charmingness of the expression harmoniously blends itself with the spectacular success. Thus translating the song in the original :

> nācere nāce caraṇ nāce prāṇer kāche prāṇer kāche /
> Prahar jāge, praharī jāge, tārāy tārāy kāṃpan lāge
> Marame marame bedanā phuṭe, baṅdhan tute, bāṅdhan ṭute...

Dhyāneshnārāyan says :

> Nṛtyati caraṇayugam, prāṇasamīpaṃ prāṇasamīpam/
> Jāgarti praharī, jagrataḥ praharaḥ
> Spandate kampate naksatranikarah.
> Marmeṣu marmeṣu vikasati vedanaṁ
> Mocyate bandhanaṃ mocyate bandhanaṃ.

The effect of the melody is easily understandable : the charmingness of the expression lends a special charm to the grand image carved out by the great Creative Artist in the original and subsequently by the successful translator in the new specimen of Poetry.

Rabindra Bharati University, which has for one of its objectives propagation of Tagore Culture has

Though renderings of Tagore's writings into modern European and Indian Languages have been many, no serious attempt has yet been made to render these writings into Sanskrit so that lovers of oriental learning can have an easy access to them. The reason is obvious Whereas there are a number of scholars competent to translate the novels, dramas and poems of Tagore into various Indian and European languages, there are only a handful scholars of modern society, who havc the competence of translating these writings in to Sanskrit, retaining all the time the spirit of Tagore. The work of translation itself is extremely difficult, in as much as, it does not consist simply in giving equivalent expressions of the expressions employed by the Artist in various languages : the translator is required to instill the spirit of the writings as well in the translation. Poetry, as a mattər of fact, is a Gestalt, and it is not possible to take out even a single expression from the edifice of Poetry : if this is done, tho Poet may appear as saying something which he does not want to say. When this is the case, the difficult nature of the translator's job becomes all the more clear, because the translation of a Poem or a Novel or a Drama is a separate artistic creation, retaining the spirit of the original and shining at the same time in the splendour of the objective correlative, newly inducted by the translator. Since the spirit of Tagore's writings is extremely abstruse, being philosophical in nature, particularly in his Dramas, most of which are allegorical in character, it is only with utmost care that his writings can be translated successfully.

Posterity is indebted to Professor Dhyaneshnarayan Chakrabarti of Rabindra Bharati University for very kindly coming forward to render the writings of Tagore into Sanskrit and to make them available to the lovers of Oriental learning. Himself a great scholar in Sanskrit

Professor Chakrabarti is one of those front-ranking lover of Sanskrit, who have been expanding their energy in popularising Sanskrit with the ultimate objective of maintaining Indian Culture and in projecting its richness to the future mankind. He has already translated a few Poems and Dramas of Tagore, and the appreciation which he has received from the scholarly world on this score is simply astounding. Professor Chakrabarti possesses a thorough grasp over Tagore's Philosophy and his total command over Sanskrit idioms and Expressions has made it possible for him to build a new creation, shining in its own splendour and enshining at the same time the grand philosophy of Tagore. Gifted with a grand sense of music he translates the songs of the original in such a manner that the charmingness of the expression harmoniously blends itself with the spectacular success. Thus translating the song in the original :

> nācere nāce caraṇ nāce prāṇer kāche prāṇer kāche /
> Prahar jāge, praharī jāge, tārāy tārāy kāṃpan lāge
> Marame marame bedanā phuṭe, baṅdhan tute, bāṅdhan ṭute...

Dhyāneshnārāyan says :

> Nṛtyati caraṇayugam, prāṇasamīpaṃ prāṇasamīpam/
> Jāgarti praharī, jagrataḥ praharaḥ
> Spandate kampate naksatranikarah.
> Marmeṣu marmeṣu vikasati vedanaṁ
> Mocyate bandhanaṃ mocyate bandhanaṃ.

The effect of the melody is easily understandable : the charmingness of the expression lends a special charm to the grand image carved out by the great Creative Artist in the original and subsequently by the successful translator in the new specimen of Poetry.

Rabindra Bharati Uṇiversity, which has for one of its objectives propagation of Tagore Culture has

decided to publish as a part of this 'Tagore Culture Programme' the second edition of the translations of 'Muktadharā, and 'Dāk-ghara', rendered by Professor Dhyaneshnarayan Chakrabarti in Sanskrit. The first edition of these two Sanskrit renderings had seen the light of the day long back, and the approbation which it received from the scholarly world had been austounding and and encouraging. The University is fortunate in having a dedicated and scholarly member of the academic community in Professor Chakrabarti who is presently known to all lovers of oriental learning and Indian Culture. I am sure the second revised edition of these two works will achieve equal celebrity and will be widely appreciated in the country and abroad. I congratulate the translator-artist and take great pleasure in presenting the new editions of Sanskrit renderings of 'Muktadhārā' and 'Dāk-ghar' to the bar of the academic world. I put on record further, my appreciation of the service rendered by the Publication unit of the University headed by Sm. Sibani Chatterji in the matter of publication of the new edition.

**S/d. Ramaranjan Mukherji**

1. 12. 87.

# भूमिका

( १ )

ईशवीय-द्वाविंशत्युत्तरोनविंश-शतकस्य 'जानुयारी'-मासि शान्तिनिकेतने विरचिता "मुक्तधारा"। पद्मेति तटिन्याः वक्षसि नौगृहे सप्ताहपरिमित-कालमुषित्वा शान्तिनिकेतनं प्रत्यागत्यैव कविर्नाटकमिदं प्रणेतुमारब्धवान्। ईशवीय-द्वाविंशत्युरोनविंशशतकस्य जानुयारीमासस्य त्रयोदशदिवसे तेन च परिसमाप्तं नाटकम्। "समग्रं सप्ताहं व्याप्य कस्यचिन्नाटकस्य विरचने निमग्नोऽहमासम्। मया च तस्य समाप्तिं नीताम्। अतोऽहमद्य मुक्तः सञ्जातः।" —इत्येवं वान्धवमेकमुद्दिश्य कविना कस्यांचित् लिपिकायां लिखितम्।

वन्धनमेकं निर्माय शिवतलाधिवासि-कृषीवलानां जलप्रवाहो निरुद्धीकृत उत्तरकूटाधिपतिना। तेन राज्ञा सुपरिकल्पित-निपीडनमभिलक्ष्य तत्रत्यानां कृषीवलानां संग्राममवलम्ब्य विरचितेयं नाटिका। कतिवर्षाणि यावत् सुशस्यमप्राप्य यदा ते राजस्वप्रदानम् अस्वीकृतवन्तस्तदा राजा पल्लीवासिनस्तान् अशान्तान् दण्डयितुमैच्छत्। शिवतलाधिवासिनः प्रति राज्ञो निष्ठुरं निपीडनं संलक्ष्य उत्तरकूटाधिवासिनस्तु हर्षंगताः। वन्धन-निर्माणकारिणं विभूति-नामधेयं राज्ञो मुख्ययन्त्राधिकारिकं ते नितरां प्रशशंसुः।

राजा तस्य राजशक्तिं यन्त्राधिकारिकं विभूतिञ्च नियोक्तुमभिलषन् मनुष्याविष्कृतं यन्नैर्व्यक्तिकं यन्त्रवलं, तस्यैव प्रकर्षं प्रमाणयितुं चेष्टयामास। शिवतलाधिवासिनां कृषिफलस्य जलाभावेन विनाशस्तेन च क्षुधया जनानामपि मरणं तेन मनागपि न परिगणितम्। "मत्कल्पितं वन्धनं जलस्रोतसा न ध्वंसयितुं शक्यते, अश्रुप्रवाहेण च मे यन्त्रं नापि शक्यते प्रचालयितुम्। प्राकृतिक-शक्तिनिचयेन सह यन्त्रस्य मे संग्रामः। मनुष्योत्सृष्टेण पुञ्जीभूते-नाभिशापेन नासाद्यते किमपि फलमिति" स सदर्पमुद्घोषयामास। एतासां शक्तीनां प्रातिकूल्येन—हृदयहीनायाः लुब्धायाश्च राष्ट्रशक्तेस्तथा च निरात्मि-कायाः नैर्व्यक्तिक-यन्त्रशक्तेश्च विरुद्धतया युवराजोऽभिजित् यन्त्रशक्ति-परिपुष्ट-दानव-वल-निपीडित-जनानां कृते तस्य मानवतायाः प्रेम्णः सहानुभूतेश्च शक्तिं प्रतिष्ठितवान्।

बन्धन-निर्माणकाले यद्दुर्वलस्थानमासीत्, तत्तु युवराजोऽजानात्। शिवतलस्य क्षेत्रेषु मुक्तधारायाः जलधारा यथा पुनःप्रवाहिता भवति एतदर्थं स बन्धनं विध्वंसयितुं स्थिरीकृतवान्। राजा तम् अस्मात् निवर्तयितुमचेष्टत। पुनर्व्यर्थः सन् स युवराजं कारायामक्षिपत्। कारावन्धनात् युवराजस्य पलायने अवसरदानार्थं युवराजानुगामिनः कारागृहे अग्निसंयोगं कृतवन्तः। गभीरे निशीथे युवराजो बन्धनस्थलमुपगम्य तस्य दुर्वलस्थानमाहत्य तद् विध्वस्तवान्। एवं प्रवाहस्य बन्धनवाधा दूरीभूता। एतावत्कालं यावत् निरुद्धो मुक्तधारायाः जलराशिः महता स्रोतसा पुनःप्रवाहितः। तेन स्रोतसा अभिजिदपि अपवाहितः।

"यन्त्रमाहन्ति जीवनम्। अतोऽभिजित् न तु यन्त्रशक्त्या, अपि तु स्वजीवनोत्सर्गेण यन्त्रं विध्वस्तवान्। ये खलु तावद् यन्त्रेण मानवं पीडयन्ति, तेषां कार्येषु भीषणो दुर्विपाकः प्रच्छन्नरूपेण तिष्ठति। यतो, यां मानवतां ते विनाशयितुं चेष्टन्ते, सा तु मानवता तेष्वपि दृश्यते। तेषां स्वकीयं यन्त्रं तेषामेव अन्तःस्थितं मानवात्मानं पीडयति। मम नाटकीयपात्रविशेषोऽभिजिदेव निपीडक-हृदये प्रच्छन्नः स्थितः। स हि पीडितो मानवात्मा। तस्य स्वकीय-यन्त्रस्यैव पीडनात् मुमुक्षुः स जीवनम् उत्सृष्टवान्"—एतन्नु सुहृदमेकमुद्दिश्य कविसार्वभौमेण पत्रे लिखितम्।

निखिले जगतितले संकीर्णजातीयतायाः उन्मत्तोल्लासं रवीन्द्रनाथो महता दुःखेन परिलक्षितवान्। विवर्धमान-विद्वेषस्य, संगरस्य, शोणितपातस्य तथा मानवतायाः निपीडनस्य च कारणभूता या गोष्ठीपरतन्त्रता, तस्या एव विकाशरूपा खलु सा जातीयता इति सोऽचिन्तयत्।

विज्ञानस्य यन्त्रस्य च विरोधी नासीत् कदापि कविवर्यः। किन्तु यन्त्रस्य दुर्निवारस्य आधिपत्यस्यैव स खल्वासीत् सर्वथा प्रतिकूलवादी। सार्वभौम-मानवतासकाशे यन्त्रेण नूनं वश्यता स्वीकरणीया। सत्योपलब्धये ज्ञानन्तु कर्मणः स्वाधिकारे निश्चितमेव समागच्छेदित्येव प्रोक्तं तेन।

गभीरव्यञ्जनागर्भैरुत्तमसंलापैः, संयमेन, सारल्येन च भूषितं नाटकमिदं सुषमामण्डितं सुमहतीं काव्यपदवीमारूढमिति मन्ये।

ईशवीयैकपञ्चाशोत्तरोनविंशशतके कविवर्यस्य जन्म-शतवार्षिकमहोत्सवम् उपलक्ष्य कलिकाता-केन्द्रीय-नागरिक-समितिः रवीन्द्रनाथविरचितानां कति-

चिन्नाटकानां गीतानाञ्च संस्कृतेनानुवाद-निर्माणाय परिकल्पनां कृतवती। समितिकल्पिता एषा परिकल्पना तरुण-संस्कृताध्यापकद्वयेन साग्रहं परिगृहीता। रवीन्द्रभारती-विश्वविद्यालयाध्यापकेन, समितिसदस्येन श्रीमता ध्यानेश-नारायण-चक्रवर्ति-शास्त्रिणा "डाकघर" इति नाटकस्य "वार्तागृहम्" इति नाम्ना संस्कृतभाषया अनुवादो विहितः। अनन्तरं संस्कृतमहाविद्यालयाध्यापकेन श्रीमता विमलकृष्णमतिलालेन "रथेर रशि" इति नाटकस्य "रथरज्जुः" इति नाम्ना संस्कृतानुवादः कृतः। संस्कृतेनानूदितम् एतन्नाटकद्वयं बहुशोऽभिनीतं विदग्धैर्दर्शकैश्चाभिनन्दितम्।

अध्यापकप्रवरेण श्रीमता ध्यानेश-नारायण-चक्रवर्तिना पुनरधुना "मुक्तधारा" इति नाटकं संस्कृतभाषया अनुदितम्। निखिले भारते साहित्यरसिकैरयमनुवादो नूनं नितरामभिनन्दितो भविष्यतीति सुदृढो मे आशयः। मूलानुसारी चायमनुवादोऽतितरामुत्कर्षमुपगतः। भारतीयजनानां सांस्कृतिकसंहति-साधनार्थं गुरुदेव-रवीन्द्रनाथ-विरचितानां रचनानां संस्कृतेनानुवादे अध्यापक-चक्रवर्तिमहोदयो निरतस्तिष्ठत्विति मे ऐकान्तिकी कामनेति—

श्रीसौम्येन्द्रनाथ-ठाकुरस्य

अक्टोबरमासस्य विंशदिवसः, १९६३

४ संख्यक एल्गिन् रोड्, कलिकाता।

## PROEM

"Muktadhara" was written at Santiniketan in January, 1922. After spending a week in his houseboat on river "Padma", the poet returned to Santiniketan and immediately commenced writing this playlet which he finished on the 13th January, 1922. In a letter to a friend the poet wrote—"I had been busy the whole week writing a drama. I have finished it. So, now, I am free."

The theme of this playlet deals with the struggle of the peasants of the village Shivtarai against the calculated act of tyrrany of the king of Uttarkut who had stopped their water-supply by the construction of a dam near the spring "Muktadhara". The king wanted to punish the turbulent villagers of Shivtarai who had refused to pay him taxes as they did not get good harvest a number of years. The villagers of Uttarkut were delighted with the king's cruel measures against the villagers of Shivtarai. They were full of praise of Bibhuti, the chief mechanic of the king, who had built the dam.

The king wanted to assert his royal power and Bibhuti, the mechanic, wanted to prove the excellence of the machine that represented the impersonal mechanical power, invented by man. He did not care if crops of the villagers of Shivtarai would perish for lack of water, and men would die from hunger. Boastingly he asserted :—"My dam cannot be toppled down by the current of water, and my machine cannot be moved by the flood of tears My machine is at war with the forces of nature, curses heaped upon it by men are of no consequence'.

Against these forces—the heartless and covetous state-power and the soulless impersonal power of the

machine—Prince Abhijt pitted his force of humanism, love and sympathy for the people ground down by the demon of power aided by the force of machine.

The prince knew the weak spot in the construction of the dam. He resolved to demolish the dam so that the waters of "Muktadhara" may once again flow in the fields of Shivtarai. The king tried to desude him from this, but he failed to do so and he imprisoned the prince. The followers of the prince set fire to the prison-camp so that the prince may escape from his captivity. In the dark night the prince reached the dam, hit the weak spot of the dam and broke it. The dam gave away the waters of "Muktadhara", imprisoned so long, once again flowed in mighty current—but prince Abhijit was carried away by the flood.

In a letter to a friend the poet wrote the following about his playlet—"Machine is hurting life. So, Abhijit smashed the machine, but not by the power of machine but by sacrificing his own life. A terrible tragedy lurks in the activities of those who hurt man by machine. Because, the humanism, they try to destroy is also to be found in them. Their own machine is hurting the inner man within them. Abhijit of my playlet is the oppressed inner man lying hidden in the heart of the oppressor. He has sacrificed his life in order to be free from the tyranny of his own machine."

Rabindra Nath had obeserved with keen regret the orgies of chauvinism throughout the world. He considered nationalism as the manifestation of tribalism, responsible for the mounting hatred, conflict, bloodshed and the mutilation of humanity.

The poet was by no means against science or machine. But, he was wholly against the untramallled autocracy of the machine. Machine must owe its

## PROEM

"Muktadhara" was written at Santiniketan in January, 1922. After spending a week in his houseboat on river "Padma", the poet returned to Santiniketan and immediately commenced writing this playlet which he finished on the 13th January, 1922. In a letter to a friend the poet wrote—"I had been busy the whole week writing a drama. I have finished it. So, now, I am free."

The theme of this playlet deals with the struggle of the peasants of the village Shivtarai against the calculated act of tyrrany of the king of Uttarkut who had stopped their water-supply by the construction of a dam near the spring "Muktadhara". The king wanted to punish the turbulent villagers of Shivtarai who had refused to pay him taxes as they did not get good harvest a number of years. The villagers of Uttarkut were delighted with the king's cruel measures against the villagers of Shivtarai. They were full of praise of Bibhuti, the chief mechanic of the king, who had built the dam.

The king wanted to assert his royal power and Bibhuti, the mechanic, wanted to prove the excellence of the machine that represented the impersonal mechanical power, invented by man. He did not care if crops of the villagers of Shivtarai would perish for lack of water, and men would die from hunger. Boastingly he asserted :—"My dam cannot be toppled down by the current of water, and my machine cannot be moved by the flood of tears My machine is at war with the forces of nature, curses heaped upon it by men are of no consequence'.

Against these forces—the heartless and covetous state-power and the soulless impersonal power of the

[ नेपथ्ये—जागृहि, भैरव, जागृहि ]

( धनञ्जयस्य प्रवेशः )

कङ्करः—पश्य तावत्, गमनोद्यगे अमङ्गलम् ।

विभूतिः—सन्न्यासिन्, युष्मादृशाः साधवः एतावत्कालं यावत् भैरवं जागरयितुमशक्ताः ; परन्तु यः खलु पापण्ड इति भवद्भिराख्यायते सोऽहमेव जागरयितुं प्रचलामि ।

धनञ्जयः—तत्तु मया स्वीक्रियते ; युष्माष्वेव न्यस्तो जागरणभारः ।

विभूतिः—नैतत्तु घण्टां सञ्चाल्य, आरात्रिकदीपं प्रज्वाल्य युष्मादृशै-र्देवस्य जागरणम् ।

धनञ्जयः—न हि, यूयं शृंखलेन तं बद्धं करिष्यथ, शृंखलच्छेदनार्थमेव स जागरिष्यति ।

विभूतिः—निगडमस्माकं न हि सरलम्, तत्रास्ति घूर्णानात् परं घूर्णनम्, ग्रन्थेः परं ग्रन्थिः ।

धनञ्जयः—सर्वाधिकं दुःसाध्यं यदा भवति, तदैवागच्छति तस्य कालः ।

[ भैरवपन्थिनः प्रवेशः ]

( गानम् )

जयतु भैरव ! जयतु शंकर
जयतु जयतु प्रलयंकर !
जयतु संशय-भेदन !
जयतु संकट-संहर !
शंकर हे शंकर ।

( प्रस्थानम् )

[ रणजितो मन्त्रिणश्च प्रवेशः ]

मन्त्री—महाराज, शिविरं कृत्स्नमेव शून्यम्, तत्र बहुशो दग्धमेव । आसन् तत्र स्वल्पसंख्यकाः रक्षिणः ; ते तु—

रणजित्—वर्तन्तां ते यत्रैव ; कुत्रास्ते अभिजिदित्येव ज्ञातव्यम् ।

कङ्करः—महाराज, अस्माभिर्युवराजाय दण्डः प्रार्थ्यते ।

रणजित्—यः खलु दण्डनीयस्तस्मै दण्डप्रदाने किं मया युष्मदभिमत-मपेक्ष्यते ?

कङ्कर:—अनुसन्धानेन तमप्राप्य मनसि संशयगताः प्रजाजनाः।

रणजित्—कथम् ? संशयः! कमुपलक्ष्य ?

कङ्कर:—क्षम्यतां महाराजः। प्रजानां मनोभावो भवता ज्ञातव्यः। अनुसन्धाय युवराजस्य प्राप्तौ यादृशो विलम्बो भवति, तेषामधैर्यमपि तादृशमेव परिवर्धते। अतो यदा स प्राप्स्यते, तदा दण्डदाने ते महाराजस्यापेक्षां न करिष्यन्ति।

विभूतिः—महाराजस्यादेशमनपेक्ष्यैव नन्दिसंकटस्य भग्नदुर्गसंस्कारभारोऽस्माभिः स्वकीयहस्तैर्गृहीतः।

रणजित्—कथं न मम हस्ते रक्षितम् ?

विभूतिः—या खलु भवतो वंशस्यैवापकीर्तिस्तत्रास्ति भवतोऽपि गोपनसम्मतिरित्येतत् सन्देहपोषणं मनुष्याणां स्वाभाविकम्।

मन्त्री—महाराज, अद्य जनानां मनांसि एकतः आत्मश्लाघया, अन्यतश्च क्रोधेनोत्तेजितानि। अधैर्येणाद्य अधैर्यं मा मा उद्दीपय।

रणजित्—कोऽत्र दण्डायमानस्तिष्ठति ? किं धनञ्जयाख्यः सन्न्यासी ?

धनञ्जयः—तं सन्न्यासिनं महाराजः स्मरतीति पश्यामि।

रणजित्—युवराजः कुत्र, इति नूनं त्वया ज्ञायते।

धनञ्जयः—न हि महाराज, यदहं निश्चितमेव जानामि, तत्तु गोपयितुं न शक्नोमि। अतो मया विपदि निपत्यते।

रणजित्—तदा अत्रैव किं क्रियते ?

धनञ्जयः—युवराजस्य प्रकटनार्थं मया चापेक्ष्यते।

( नेपथ्ये )

[ सुमन! वत्स सुमन! अन्धकारः सञ्जातः, सर्वम् अन्धकारावृतं भवति। ]

राजा—काऽसौ ?

मन्त्री—अम्बेतिनाम्नी सैवोन्मोत्ता नारी।

[ अम्बायाः प्रवेशः ]

अम्बा—अहो, कुत्र सः। स तु न प्रत्यागतः।

रणजित—कथं तस्यानुसन्धानं करोषि ? सम्प्राप्ते काले स हि भैरवेण समाहूतः।

अम्बा—भैरवः किं केवलमाह्वयति ? स हि किं कदापि न प्रत्यर्पयति ? निःशब्दम् ? गभीरायां रजन्याम् ? सुमन ! सुमन !

( प्रस्थानम् )

[ चरस्य प्रवेशः ]

चरः—शिवतलात् समागच्छन्ति सहस्रशो जनाः ।

विभूतिः—किमिदम् ? अकस्माद्वयं तत्र गत्वा तान् निरस्त्रान् करिष्यामः —इत्येव चासीत् संकल्पः । नूनं युष्मासु कोऽपि विश्वासघातकस्तेभ्यः वार्ता प्रदत्तवान् । कङ्कर, युष्मान् कतिजनान् ऋते न कोऽपि जानाति आभ्यन्तरीयां वृत्तान्तम् । तदा तु कथमेवम्—

कङ्करः—विभूते, किम् ! किमस्मास्वपि जायते तव सन्देहः ?

विभूतिः—सन्देहो न कुत्रापि सीमितः ।

कङ्करः—तदा तु त्वय्यपि सञ्जातश्चास्माकम् सन्देहः ।

विभूतिः—युष्माकमस्त्येव स त्वधिकारः । भवतु, यथाकालमस्य विचारः करणीयः ।

रणजित्—( चरं प्रति ) अपि जानासि—केनाभिप्रायेण ते आगच्छन्तीति ?

चरः—युवराजो वन्दीकृत इति तैः श्रुतम् ; अनुसन्धाय तम् आविष्करिष्यन्तीति तैः प्रतिज्ञातम् । इतस्तं मोचयित्वा ते तमेव शिवतलस्य राजानं कर्तुमिच्छन्ति ।

विभूतिः—अस्माभिरप्यनुसन्धानं क्रियते ; तेऽप्यनुसन्दधति युवराजम् ; पश्यामि तु केन गृहीतो भवतीति ।

धनञ्जयः—युष्माकं गोष्ठीद्वयस्यैव हस्ते स पतिष्यति, तस्य मनसि नास्ति पक्षपातित्वम् ।

चरः—सोऽयमागच्छति शिवतलस्य मण्डलपतिर्गणेशः ।

( गणेशस्य प्रवेशः )

गणेशः—( धनञ्जयं प्रति ) देव, अपि तं प्राप्स्यामः ?

धनञ्जयः—आम्, अरे नूनमेव प्राप्स्यसि !

गणेशः—तन्निःसंशयमुच्यताम् ।

धनञ्जयः—अरे, अवश्यमेव प्राप्स्यसि ।

रणजित्—तत् कस्यानुसन्धानं क्रियते ?

गणेशः—अयमसौ, राजन्, मोचनीयः सः ।

रणजितः—कः ?

गणेशः—अस्माकं युवराजः । युष्माभिः स न काम्यते, स त्वस्माकं वाञ्छितः । किमस्माकं सर्वाण्येव युष्माभिर्निरुध्यन्ते ? सोऽपि ?

धनञ्जयः—अरे मूढ, न परिज्ञायते युष्माभिर्मानुषः । तस्य निरोधे कस्यास्ति शक्तिः ?

गणेशः—तमस्माकं राजानं कृत्वा रक्षिष्यामः ।

धनञ्जयः—नूनं रक्षणीयः । राजवेशं परिधाय स समागमिष्यति ।

[ भैरवपन्थिनः प्रवेशः ]

( गानम् )

तिमिर-हृद्-विदारण
ज्वलदग्नि-निदारुण
मरुश्मशान सञ्चर ।
शंकर हे शंकर ।
वज्रघोषवाणी
रुद्र-शूलपाणी
मृत्युसिन्धु-सन्तर
शंकर हे शंकर ॥

( प्रस्थानम् )

( नेपथ्ये )

[ नेपथ्ये जननी आह्वयति । वत्स सुमन, प्रत्यागच्छ, प्रत्यागच्छ । ]

विभूतिः—किमेतच्छ्रूयते ? कस्यायं शब्दः ?

धनञ्जयः—अन्धकारस्य वक्षसि कस्येदमट्टहास्यम् ?

विभूतिः—आः, तूष्णीं भव ! उच्यतां, कस्याः दिशः समागच्छति चायं शब्दः ?

( नेपथ्ये )

[ विजयतां भैरवः । ]

विभूतिः—स्पष्टोऽयं जलस्रोतसः शब्दः ।

धनञ्जयः—नृत्यारम्भस्य प्रथमोऽयं डमरुध्वनिः ।

विभूतिः—शब्दस्तु तीव्रो भवति, ननु प्रवर्धते ।

कङ्करः—इदन्तु—

नरसिंहः—प्रतीयते यत्—

विभूतिः—वाढं, वाढं, नास्ति सन्देहः । तूर्णं प्रवहति मुक्तधारा । तत् केन ध्वस्तीकृतं वन्धनम् ? केन विदीर्णीकृतम् ? नास्त्येव तस्य परित्राणम् ।

( कङ्कर-नरसिंह-विभूतीनां प्रस्थानम् )

रणजित्—मन्त्रिन्, किमिदं संवृत्तम् ?

धनञ्जयः—वन्धन-भंगोत्सवे योगदानार्थं समागतम् आह्वानम् ।

( गानम् )

ध्वनति डमरुर्ध्वनति

हृदयमध्ये ध्वनति ।

मन्त्री—महाराज, मन्ये यथेदम्—

रणजित्—सत्यं, मयापि मन्यते, इदं तस्यैव—

मन्त्री—तं विना अपरस्य कस्यापि—

रणजित्—अस्ति एतादृशः साहसः ?

धनञ्जयः— ( गानम् )

नृत्यति चरणयुगं

प्राण-समीपे प्राण-समीपे ॥

रणजित्—दण्डः प्रदातव्यश्चेत्तदाऽहमेव दण्डं विधास्यामि । किन्तु, उन्मत्तेभ्यश्चैतेभ्यः प्रजाजनेभ्यो देवानां प्रियं मम अभिजितं रक्षन्तु देवाः ।

गणेशः—प्रभो, किं वृत्तम् ? नाऽहं किमप्यवगच्छामि ।

( गानम् )

जागर्ति प्रहरी, जाग्रतः प्रहरः

स्पन्दते कम्पते नक्षत्र-निकरः ।

रणजित्—पदध्वनिरिव श्रूयते । अभिजित्! अभिजित्!

मन्त्री—मन्ये सोऽयमागच्छति ।

धनञ्जयः— ( गानम् )

मर्मेषु मर्मेषु विकशति वेदनम्

मोच्यते बन्धनं मोच्यते बन्धनम् ।

( सञ्जयस्य प्रवेशः )

रणजित्—अये, सञ्जयः समागतः । भोः कुत्रास्ते खल्वभिजित्?

सञ्जयः—मुक्तधारास्रोतसा तत्रभवान् दूरं नीतः, नास्माभिः स कुत्रापि सम्प्राप्तः ।

रणजित्—कुमार, किमुच्यते त्वया!

सञ्जयः—मुक्तधारायाः बन्धनं युवराजेन विध्वस्तीकृतम् ।

रणजित्—सर्वमवगतम् । तेनैव मुक्तिसाधनेन तेनापि मुक्तिः सम्प्राप्ता । सञ्जय, किं त्वामपि स सहैव नीतवान्?

सञ्जयः—नहि, नहि । किन्तु, मयानुमितं यत् स तत्रैव गमिष्यति । गत्वा च तत्र अन्धकारे अहं तदर्थं प्रतीक्षितवान् । किन्त्वेतावदेव—तेन निवारितोऽस्मि, अन्ते च गमनं मे तेन निरुद्धम् ।

रणजित्—किं नु वृत्तं, कथ्यतां सविस्तरम् ।

सञ्जयः—तस्य बन्धनस्य काञ्चित् त्रुटिं स केनाप्युपायेन परिज्ञातवान् । तत्रैव यन्त्रासुरे तेनाघातः प्रदत्तः । यन्त्रासुरेण सोऽपि प्रत्याहतः । तदा हि मुक्तधारा प्रत्याहतं तस्य कलेवरं जननीव अङ्कीकृत्य दूरं प्रचलिता ।

गणेशः—युवराजस्यानुसन्धानार्थमेव वयं निर्गताः । तर्हि, किं तं न पुनः प्राप्स्यामः?

धनञ्जयः—युष्माभिः स हि चिराय सम्प्राप्तः ।

( भैरवपन्थिनः प्रवेशः )

( गानम् )

जयतु भैरव! जयतु शंकर!

जयतु जयतु प्रलयंकर !
जयतु संशयभेदन,
जयतु बन्धनच्छेदन ।
जयतु संकटसंहर
शंकर हे शंकर !

तिमिर-हृद्-विदारण
ज्वलदग्नि-निदारुण
मरुश्मशान-सञ्चर
शंकर हे शंकर !

वज्रघोष-वाणी
रुद्र, शूलपाणे
मृत्यु-सिन्धुसन्तर
शंकर हे शंकर !

---

## Extracts from some of the reviews

**The Mother—March, 1967**

Professor Dhyanesh Narayan Chakrabarti is a well-known name in the world of Sanskrit studies in this Country. It is not for us to appraise his erudition, to which high tribute have been paid, though, by those who know. Apart from his scholarship, however, his zeal in popularising Sanskrit both in cultured circles and among the masses has attracted general notice and evoked unstinted admiration. Sanskrit is supposed to be an excessively stiff language with a grammatical structure which is to complicated to be generally managed. This impression is a superstition, pure and simple; unhappily it has gained ground. The result is the only Indian language fit to be India's State language remains ignorantly neglected and our language problem remains virtually unsolved.........

To dispel the popular misconception about its stiffness and unintelligibility is to serve a great cause: to do this is to provide the country with its most potent weapon for national integration. Whatever and whoever, promotes this cause, whoever, and whatever, can show that Sanskrit is not Greek or Hebrew to us should be warmly and loudly acclaimed. So, Professor Chakrabarti's Sanskrit rendering of Tagore's "Mukta-dhara" is surely a very laudable attempt. This is not his maiden attempt, though he had translated "Dak-Ghar" (The Post-office) of Tagore into Sanskrit on the occasion of his birth centenary in 1961. It is good of him to have continued in this task and we have had a second Tagore play in Sanskrit which sustains his reputation as translator. Doing Tagore into Sanskrit thus, he serves both Sanskrit and Bengali (for that matter, Tagore); he enriches Sanskrit and enables many, so far denied access to him,

to appreciate Tagore. His works have of course been translated into many languages native and foreign ; but little of him has so far appeared in Sanskrit. And surely there are many, at home and abroad, who know only Sanskrit apart from their own tongues ; who therefore are not in a position to read Tagore, not knowing either Bengali or any of the languages in which versions of Tagore are available. If, for nothing else, for the sheer prestige of Sanskrit, here as well as elsewhere, Sanskrit renderings of Tagore have long been over-due, and we congratulate Prof. Chakrabarti on his doing what, although imperative, has escaped our notice. And how well he has done it may be seen by just a casual glance at his translation, which indeed reads like an original and reproduces the very graces and subtleties of the original, which will be the envy and despair of all successors in this mission. This is all the more remarkable because the play itself seems to be even less amenable to translation than Tagore plays generally are. Though it is "attractive reading", as Dr Thompson, Tagore's best critic argues, it is "even more of closet-play than previous ones. Naturally its appeal is fine rather than broad, and to fine touches a translation can but do scant justice. This is attested by its English version which appeard as the Waterfall (actually it means The Free Current, and that is how Dr. Thompson translates the title) in The Modern Review of May 1922. Able as it is, the nuance are not so well suggested there, as in Professor Chakrabarti's Sanskrit translation, in which the dialogue is as crisp and lively as it is in the original, the songs sing about as sweet, and equally, racy colloquialism gives and edge to rapt lyricism. Poetry, when it is in prose, eludes the translator ordinarily and Sanskrit is the least capable of expressing such subtle undertones, for all one thought. The

present version belies the suspicion and the translator has been able to give an exceptionally good account of himself because his medium is so supple and rich and his command of it so consummate. In Tagore's play one hears "the murmur of the Free Current"; the sounding cataract haunts as much in the translation. In the original the Machine lurks, "sinister against the Sunset, crouching over the loud and its life, overtopping even God's temple"; so does it exactly in the translation!

As in the original so in the translation the breaking dam reverberates and the water's rage aloud and fierce, diving wrath accumulates and frowns on pround man's contumely. "Finest of all", says Tagore's most sensitive critic, "is the constant quiet drift of folk along the roads, the procession of life". This of course is in the original, but who could have thought that even in Sanskrit rendering this impression might be equally persistent, whether the drama is "the greatest of Tagore's symbolical play" as may be questioned : that the translation is wonderfully apt and entirely adequate must be universally acknowledged. Only, the little page might leave to advantage the epithet 'The Great Poet' which is applied to Tagore. Tagore is too great for that!

**The Amrita Bazar Patrika—26th July, 1964**

Rabindranath's "Muktadhara" has been rendered into apt Sanskrit by Sri Dhyanesh Narayan Chakrabarti Sahitya-Sastri of Rabindra Bharati University.

Professor Dhyanesh Narayan Chakrabarti has earned well-merited reputation by his translations of the works of Rabindranath. He has been helping cultural integration of the people of India by rendering

into lucid and beautiful Sanskrit the significant works of the most significant writer of the modern age.

**'TRUTH'—2nd October 1964**

Muktadhara a Sanskrit rendering of the Bengali drama of Rabindra Nath by Prof. Dhyanesh Narayan Chakrabarty, Sahitya Shastri, M.A. Price 3/- (available from Sanskrita Pustaka Bhandar, 38 Bidhan Sarani, Calcutta-6).

"Muktadhara is an allegorical drama by Rabindra Nath. Man is today machine-mad ; machines, more machines and monster machines—is the fad of modern civilisation. And machine has become the measure of a man's power and progress. But alas ! little does he understand that the dam, huge and horrible, that he erects to stop the flow of natural stream on earth, dams his soul as well and stops the stream of elevating emotions that lead him on to perfection and to his Lord. And the hero of this drama, the young prince Abhijit smashes this sinful machine sacrificing his own life. This, in brief, is the noble message that Rabindra Nath gives out through this drama, couched in a language which, though prose in form, has the sweetness and intensity of a lyric veiled in a symbolism which is crystal clear even to the meanest intellect. It has an appeal which is universal and most opposite for the world of to-day.

Prof. Dhyanesh Narayan Chakrabarti therefore took upon himself the task of bringing out a version of this enchanting piece of literature in Sanskrit because the learned Professor has rightly discovered that the source of the betwitching beauty which the poet-philosopher caters to his readers lies the profundity of

Sanskrit literature, the richest store house of literary beauty in the world. Very rightly he says—

संस्कृतसाहित्यस्य सरसभूमौ हि प्रोथितं वर्त्तते रवीन्द्रसाहित्यरुपिण: कल्पतरोर्मुलम्...ऊनउमविंश शतके यद्यपि स आविर्बभूव तथापि संस्कृतसाहित्यस्य वैदिके तथा पौराणिके युगे विहरति तस्य सौन्दर्यसन्धायि कविचेत: ।

The Divine plant of Rabindranatha's poetry was deeply rooted in the fertile soil of Sanskrit literature. Though born in the 19th century the poet's mind, the eternal seeker of bliss and beauty, revelled constantly in the vedic and Pauranic Yuga—the region of rare abundance of poetical wealth. Rabindranath himself admitted that Sanskrit was *sine qua non* for the development of his mother tongue and Prof. Chakrabarti is perfectly right when he asserts :—

सर्वमारतीयक्षेत्रे संस्कृतभाषाव्यवहार एव आसीत् तस्य प्रवणता ।

And again quite alive to the close kinship existing between Bengali and Sanskrit a relation as tender and cordial as between the mother and the child—Prof. Chakrabarti knows that the note struck by the poet in his drama will resound as sweetly, if not more sweetly, in Sanskrit as it has done in Bengali. As a matter of fact while reading the Sanskrit version one will often forget that it is not the original book—so happy, so easy and natural has been the artistic rendering. In many places dialogues, songs and even stage directions in the original and its Sanskrit version have a strange resemblance in sound, sense and to choice of words, out of hundreds we quote, due to paucity of space, only one :—

Dhananjay vairagi sings in the original

নাচেরে নাচে চরণ নাচে<br>
প্রাণের কাছে প্রাণের কাছে ;<br>
প্রহর জাগো, প্রহরী জাগে<br>
তারায় তারায় কাঁপন লাগে।

মরমে মরমে বেদনা ফুটে
বাঁধন টুটে, বাঁধন টুটে।

And rendered in Sanskrit it is—

नृत्यति चरणयुगं
प्राणसमीपं प्राणसमीपं ।
जागर्त्ति प्रहरी जाग्रतः प्रहरः
स्पन्दते कम्पते नक्षत्रनिकरः ।
मर्म्मेषु मर्म्मेषु विकशति वेदनम्
मोच्यते बन्धनं मोच्यते बंधनम् ।

That such valuable rendering into Sanskrit of modern dramas of a great literary genius like Rabindranath which has earned the encomium from world-famous scholars and savants not only goes a long way towards the propagation of Sanskrit, but it also shows which way the integration of India lies.

Our sincerest thanks are therefore due to Prof. Charaborti for the noble work he has done so elegantly and successfully and we pray to the Almighty that his pen may be more and more prolific in producing such things of beauty which are indeed joy for ever.

**বিশ্বভারতী পত্রিকা,** কার্তিক-পৌষ, ১৩৭৩

গ্রন্থখানি রবীন্দ্রনাথের 'মুক্তধারা' নাটকের প্রথম সংস্কৃত অনুবাদ। গ্রন্থের প্রারম্ভে অনুবাদক সংস্কৃত ভাষায় একটি সুদীর্ঘ ভূমিকাও সন্নিবেশিত করিয়াছেন। বহু তথ্যের সমাবেশে ভূমিকাটি অত্যন্ত মনোজ্ঞ ও রসজ্ঞ হইয়াছে।

অনুবাদ করা অত্যন্ত শ্রমসাধ্য ব্যাপার। কারণ মূল গ্রন্থের ভাষার সৌষ্ঠব হানি না করিয়া, যতদূর সম্ভব অর্থ অপরিবর্তিত রাখিয়া, যথাযথ ভাবে সম্পুর্ণ ভাব ও ভাষাটিকে আয়ত্ত করিয়া অনুবাদ করিতে হয়, তাহা হইলে উহা হৃদয়গ্রাহী হয় এবং পাঠকবর্গও উহার রস আস্বাদন করিয়া

পরিতৃপ্ত হন। ধ্যানেশবাবু এই বিষয়ে বিশেষ দৃষ্টি রাখায় অনুবাদটি হৃদয়গ্রাহী ও সুখপাঠ্য হইয়াছে।

প্রত্যেক ভাষারই কতকগুলি নিজস্ব বৈশিষ্ট্য আছে। সেই বৈশিষ্ট্য-সমূহ সেই দেশের জলবায়ু আচার-ব্যবহার রীতিনীতি চিন্তাধারা জীবন-প্রণালী, ভাবভঙ্গী, স্মরণীয় ঘটনা এবং বহুকাল সঞ্চিত জ্ঞান, অভিজ্ঞতা ও ধর্মের মাধ্যমে সেই ভাষায় প্রবেশ করে এবং কালক্রমে তাহার সহিত ওতপ্রোতভাবে জড়িত হইয়া যায়। অনুবাদে সেই দেশজ বৈশিষ্ট্যগুলি ধরা অত্যন্ত দুরূহ ব্যাপার। কিন্তু উভয় ভাষায় দক্ষতা থাকিলে অনুবাদ-কারীর তুলিকায় তাহার মহিমা হয়তো কিছুটা প্রকটিত হইতে পারে। আসল কথা, মূলের রচনাভঙ্গী ও বাগ্‌বিন্যাস প্রণালী যথাসম্ভব আত্মসাৎ করিয়া অনুবাদ করিলে অনুবাদকের কৃতিত্ব ও প্রতিভার পরিচয় পাওয়া যায়। ধ্যানেশবাবুর অনুবাদে এই গুণের পরিচয় আছে। তাঁহার যে উভয় ভাষাতেই পারদর্শিতা আছে, তাহা এই অনুবাদ পাঠে বোঝা যায়। অনুবাদকরাকালীন তিনি এই সমস্ত বৈশিষ্ট্যের প্রতি লক্ষ্য রাখিয়াছেন।

কোনো বৈদেশিক কবি বলিয়াছিলেন—

En la traduccion es consiguinte
Que pierda la dulzura competente.
[ 'The perfume of a pristine thought
Can't in translation be caught."

যাকে বলে 'ভাবময়ী ভাষার সুবাস, ভিন্নভাবে পায় না প্রকাশ'।

এই উক্তির তাৎপর্য এই যে সুনিপুণ শিল্পী অত্যন্ত দক্ষতা সহকারে চিত্রপটে একটি ফুল আঁকিলেও তাহাতে যেমন ফুলের বর্ণসুষমা, স্নিগ্ধ কোমলতা ও স্বর্গীয় সৌরভ প্রতিফলিত করিতে পারে না, সেইরূপ কোনো ভাষার শ্রেষ্ঠ সাহিত্যের সৌন্দর্য মাধুর্য ঔদার্য প্রভৃতি বৈশিষ্ট্যপূর্ণ গুণসমূহ অক্ষুণ্ণ রাখিয়া ভাষান্তরিত করা অত্যন্ত দুরূহ এবং প্রায় অসম্ভব।

সংস্কৃত ও বাংলা উভয়েই এক আর্য শাখায় অন্তর্ভুক্ত। একটি সুপ্রাচীন আর একটি অতি নবীন। একটি ভাব ও শব্দসম্পদে অতুলনীয়, অপরটি শব্দচয়নে ও বয়নে অদ্বিতীয়। একটি উদ্যানের রাজীব, অপরটি

উহার বনলতা। সুতরাং এই দুই এর সমন্বয় সাধন করার অর্থ হইল অতীত ও বর্তমানকে একসূত্রে গ্রথিত করা।

অনুবাদের ফলপ্রসূতা নির্ভর করে সাধারণতঃ তিনটি অঙ্গের উপর। প্রথমটি হইতেছে শব্দানুবাদ বা আখ্যানানুবাদ। এই অনুবাদের মাধ্যমে মূল সাহিত্যের সহিত কেবল পরিচয়মাত্র ঘটে। মূলের ভাষার force-টুকুকে অনুবাদ করা যায় না। যে ভাষায় প্রকাশ করা হয়, তাহার idiomটুকু রক্ষিত হয়। এই শব্দানুবাদেও নিপুণতার প্রয়োজন হয়।

দ্বিতীয় ভাবানুবাদ। যে গ্রন্থ হইতে অনুবাদ করা হয় তাহার সম্পূর্ণ ভাবটিকে অনুবাদ করা। যাহাকে বলে ভাষার spirit-কে অনুবাদ করা। ইহা খুব কঠিন কাজ। কারণ অন্যের ভাবকে নিজের করিয়া পরে সেই ভাবটিকে অন্যের করা সহজসাধ্য ব্যাপার নয়। বলাই বাহুল্য, ধ্যানেশবাবু এই ব্যাপারে বেশ সিদ্ধহস্তের পরিচয় দিয়াছেন।

তৃতীয় অঙ্গটি হইতেছে ভাষানুবাদ। অনুবাদের ভাবকে যথোপযুক্ত-রূপে রূপায়িত করিবার জন্য প্রভূত শব্দসম্পদের প্রয়োজন। যে ভাবটি অতি আধুনিক ভাষায় সহজভাবে প্রকাশ করা যায়, প্রাচীন ভাষার আশ্রয়ে উহা প্রকাশ করা তত সহজসাধ্য নয়। আধুনিক ভাব ও শব্দকে প্রাচীন ভাষার মাধ্যমে প্রকাশ করিতে হইলে যে ভাষায় অনুবাদ করা হয় তাহার উপর দখল থাকা প্রয়োজন। অনুবাদকের এ দখল আছে।

আসল কথা, ধ্যানেশবাবু এই অনুবাদে যথেষ্ট দক্ষতার পরিচয় দিয়াছেন। ভাষার সারল্যে ও প্রাঞ্জলতায়, ভাবের গাম্ভীর্যে ও মহিমায়, শব্দচয়নে ও বয়নে, বিশিষ্ট রচনাভঙ্গী ও রীতিতে অনুবাদটি সুখপাঠ্য হইয়াছে।

**রবীন্দ্র প্রসঙ্গ**, মাঘ, ১৩৭৪ ( ৬ষ্ঠ বর্ষ, ৪র্থ সংখ্যা )

অধ্যাপক শ্রীযুক্ত ধ্যানেশ নারায়ণ চক্রবর্তী রবীন্দ্রনাথের কবিতা এবং নাটক সংস্কৃতে অনুবাদ করে সুধী সমাজে ইতিমধ্যেই প্রতিষ্ঠা লাভ করেছেন। আলোচ্য গ্রন্থ 'মুক্তধারা' অনুবাদের পূর্বে তিনি রবীন্দ্রনাথের প্রতীক নাটক ডাকঘর অনুবাদ করে কৃতিত্ব প্রদর্শন করেছিলেন।

মুল নাটককে সংস্কৃত নাটকের আঙ্গিকানুসারী করবার জন্য তিনি

নান্দী এবং প্রস্তাবনার সংযোজন করেছেন। নাটক সমাপ্তিতে অনুবাদক নতুন কোন ভরতবাক্য সংযুক্ত করেন নি; মূল নাটকের ভৈরবপন্থীদের গানই ভরতবাক্যের কাজ সম্পন্ন করেছে। সংস্কৃত নাটকের পাত্রানুযায়ী বিভিন্ন ভাষা—সংস্কৃত কিংবা প্রাকৃত অনুবাদক ব্যবহার করেন নি। তাঁর দৃষ্টি সর্বক্ষণ নিবদ্ধ ছিল—মূলের সুর ও ভাবকে রক্ষা করার দিকে এবং সেখানে তিনি অত্যাশ্চর্য কৃতিত্ব দেখিয়েছেন। যাঁরা বাংলা জানেন না, সংস্কৃত জানেন, তাঁরা এই অনুবাদ পাঠ করলে প্রায় মূল নাটকেরই আস্বাদ লাভ করবেন। ......।

**রবীন্দ্রভারতী পত্রিকা,** শ্রাবণ-আশ্বিন, ১৩৭১ (২য় বর্ষ, ৪র্থ সংখ্যা)

মুক্তধারা সমসাময়িক সমাজজীবনে যান্ত্রিকতার প্রভাবে লাঞ্ছিত মানবতার মুক্তি আন্দোলনের কাব্য ও নাট্যময় রূপ। জীবন ও মানবতার মুক্তি ও স্বাধীনতার মন্ত্রগুরু রবীন্দ্রনাথ মুক্তধারা নাটকটিতে নাট্যরস ও কাব্যরসের এক অপূর্ব সংমিশ্রণ ঘটাইয়াছেন। ভাব বা আইডিয়া আদর্শের পরিবেশনের সঙ্গে সঙ্গে বস্তুরস ও জীবনরসের সংযোগ-সমাগম তুল্যানুতুল্য। তাই কবি এই নাটকটির সার্থক শিল্পায়নে অজস্র ব্যঞ্জনাময় ভাষণ প্রয়োগ করিয়াছেন, যাহা ছড়াইয়া আছে অভিজিতের বিচিত্র উক্তিতে এবং ধনঞ্জয় ও ভৈরবপন্থীদের সংগীতের মধ্যে।

সাধারণতঃ মূলের ভাব ও রস অনুবাদে অক্ষুণ্ণ রাখা প্রায় অসম্ভবই বলা চলে। সমালোচকবর প্রমথ চৌধুরী মহাশয়ের ভাষায়, 'অনুবাদের মারফৎ সাহিত্য পড়া গ্রামোফোনের মারফৎ গান শোনার মত। বিশেষ করিয়া এই জাতীয় ভাবগম্ভীর, ব্যঞ্জনাধর্মী নাটকের সার্থক অনুবাদ ততোধিক দুরূহ ও দুঃসাধ্য কৃত্য। অনুবাদের মাধ্যমে এখানকার চিত্র-চরিত্রের নিখুঁত ও নিটোল রূপ ফুটাইয়া তোলা অনুবাদকার্যের দক্ষতা-কৃতিত্বের এক অগ্নি-পরীক্ষা।

কিন্তু অধ্যাপক শ্রীধ্যানেশ নারায়ণ চক্রবর্ত্তীর অনুবাদ পড়িয়া মনে হইল, অনুবাদক এই অগ্নিপরীক্ষায় উত্তীর্ণই হইয়াছেন। মূলকে বৃন্তরূপে গ্রহণ করিয়া অধ্যাপক চক্রবর্ত্তী নিজস্ব রস-সৌন্দর্যে আখ্যান ভাগের এক সজীব ও প্রাণাঢ্য রূপ প্রদান করিয়াছেন। অনুবাদের ছন্দঃ-প্রকৃতি

সংগীতগুলির অন্তর্নিহিত ভাব ও তাৎপর্যের অক্ষুণ্ণতা সৃজনে অনেকখানি সহায়ক হইয়াছে। রবীন্দ্র-প্রযুক্ত শব্দমালার ব্যঞ্জনাধর্মটি অধ্যাপক চক্রবর্ত্তী একান্ত নিষ্ঠার সঙ্গে আয়ত্ত করিয়াছেন বলিয়া মনে হইল এবং অনুবাদ হইয়াও গ্রন্থখানি যে রসের আবেদনে অনেকখানি মূলের সমস্পর্দ্ধী ইহা তাহার অন্যতম কারণ।

পরিশেষে কাব্য-গদ্য নির্বিশেষে সাহিত্যের সুষ্ঠু ও সার্থক অনুবাদে সাহিত্যিকের অন্তর্দৃষ্টি ও জীবনদর্শনের পরিচয় যে অনুবাদকের পরম ও অপরিহার্য সম্পদ, অধ্যাপক চক্রবর্ত্তীর অনুবাদ সাহিত্যে তাঁহার সেই পরম সম্পদের পরিচয়ও কিছু অপ্রচুর মনে হয় না।

অধ্যাপক চক্রবর্ত্তীর এই অনুবাদ গ্রন্থ বহির্বাংলায় রবীন্দ্রমানসের বৃহত্তর ও ব্যাপকতর পরিচয় ও প্রচারের সূত্র হইবে, এ বিশ্বাস আমাদের ঐকান্তিক ও সুদৃঢ়।

**সাহিত্যের খবর**, ৮ম বর্ষ, ১০ম সংখ্যা, আষাঢ়, ১৩৬৮

…………এই প্রসঙ্গে আশার বাণী শুনিয়েছেন বঙ্গীয় সংস্কৃত সাহিত্য পরিষদের সদস্যবৃন্দ। রবীন্দ্রনাথকে সারা ভারতে প্রচারের এক মহৎ প্রয়াস এঁরা শুরু করেছেন। এঁরা রবীন্দ্র-নাটকের সংস্কৃত রূপের অভিনয় করেছেন গত ২২ ও ২৩ মে ইউনিভারসিটি ইন্স্টিটিউটে। 'ডাকঘর' নাটকের সংস্কৃত রূপ দিয়েছেন অধ্যাপক শ্রীধ্যানেশ নারায়ণ চক্রবর্ত্তী সাহিত্যশাস্ত্রী। …………এই সংস্কৃত অভিনয় যে কতো সহজবোধ্য হৃদয়গ্রাহী হয়েছিলো, তা এই অভিনয় না দেখলে বোঝা যায় না। ……………………রবীন্দ্র নাটকের এই অভিনয় সারা ভারতে ও বিশ্বে রবীন্দ্রনাথকে অধিকতর পরিচিত করে তুলবে বলে আশা করা যায়।

**সমকালীন**, দ্বাদশ বর্ষ, আশ্বিন, ১৩৭১

ভারতীয় জনগণকে একটি অখণ্ড ঐক্যবোধে আবদ্ধ করবার জন্য রাজনৈতিক দিক্ দিয়ে নানা চেষ্টা করা হয়েছে; কিন্তু সে সব চেষ্টা সফল হয় নি, তার কারণ আমাদের রাজনৈতিক নেতারা সমস্যার প্রকৃত

সমাধানের দিকে দৃষ্টিপাত করেন নি। সমাধানের পথ খোলা রয়েছে সাংস্কৃতিক দিক দিয়ে, রাজনৈতিক দিক দিয়ে নয়। জাতীয় সংহতি গড়ে তোলার একটি প্রধান উপায় হলো ভাষাগত ঐক্যবিধান করা। সর্বভারতীয় ক্ষেত্রে কাজকর্ম ও মানসিক ভাবের আদান প্রদান হতে পারে ইংরেজী অথবা সংস্কৃত ভাষার মাধ্যমে। ইংরেজী বিজাতীয় ভাষা বলে যদি গৃহীত না হয় তবে বাকী থাকে সংস্কৃত। কিন্তু দুঃখের বিষয় আমাদের সরকার সর্বভারতীয় ঐক্য ও সংহতি গড়ে তোলার পক্ষে সংস্কৃত ভাষার উপযোগিতা স্বীকার করছেন না। ভারতের প্রশাসন প্রণালী ও সাংস্কৃতিক ধারার বিশুদ্ধ ভারতীয় রূপ প্রকাশ হতে পারে শুধুমাত্র সংস্কৃত ভাষার মাধ্যমে, অন্য ভাষার মাধ্যমে নয়। হিন্দী ভাষার মাধ্যমে ভারতের আঞ্চলিক রূপমাত্র প্রকাশিত হতে পারে, সামগ্রিক রূপের প্রতিনিধিত্ব করার যোগ্যতা এই ভাষার নেই। হিন্দী ভাষার সরকারী পরিপোষণের ফলে ভারতের উত্তর ও দক্ষিণ অংশের লোকদের মধ্যে বিরোধ বাড়বে মাত্র। এই দুই অংশের লোকেরা প্রশাসনিক ও সাংস্কৃতিক ক্ষেত্রে শুধু কেবল সংস্কৃত ভাষার প্রচলনই নির্বিবাদে মেনে নিতে প্রস্তুত, এই সত্যটি আমরা যেন ভুলে না যাই।

সংস্কৃত ভাষার বিরোধী যাঁরা তাঁরা বলে থাকেন, সংস্কৃত 'মৃত' ভাষা, আধুনিক, চিন্তা ও কর্মের ক্ষেত্রে এ-ভাষা অচল। কিন্তু এঁদের ধারণা যে কত ভ্রান্ত তা দেখিয়ে দেবার দায়িত্ব অনেকেই গ্রহণ করেছেন। সংস্কৃত যে কেবল দেবভাষা নয়, মানবভাষাও বটে তার নিদর্শন সংস্কৃতপ্রেমী বহু পণ্ডিত বর্তমানে আমাদের সম্মুখে উপস্থাপন করেছেন। আধুনিক গ্রন্থাদি সংস্কৃত ভাষায় অনূদিত হচ্ছে, এবং সর্বভারতীয় দর্শকদের সম্মুখে সেগুলি সাফল্যের সঙ্গে অভিনীত হচ্ছে। সর্বভারতীয় ক্ষেত্রে সংস্কৃতের দান শ্রদ্ধা ও কৃতজ্ঞতার সঙ্গে উল্লেখযোগ্য। সংস্কৃত শিক্ষা বিতরণ ও ভাব প্রচারণে সংস্কৃত সাহিত্য পরিষৎ-এর প্রভাব অপরিসীম। রবীন্দ্র-ভারতী বিশ্ব-বিদ্যালয়ের সংস্কৃত ভাষা ও সাহিত্যের অধ্যাপক শ্রীচক্রবর্ত্তী রবীন্দ্রনাথের প্রসিদ্ধ সাঙ্কেতিক নাটক 'মুক্তধারা' সংস্কৃত ভাষায় অনুবাদ করেছেন। আধুনিক সাহিত্যের ভাব ও রস যে সংস্কৃত ভাষায় কত সার্থকভাবে প্রকাশ করা যায় অধ্যাপক চক্রবর্ত্তীর অনুবাদ তার সার্থক নিদর্শন।

রবীন্দ্রনাথের নাটকের জনপ্রিয়তা বর্তমানে বাংলার বাইরে প্রসারিত হয়েছে। মূল বাংলা ভাষায় রচিত কয়েকটি নাটক প্রয়োগ-নৈপুণ্যে ও অভিনয়-উৎকর্ষের জন্য বাংলার বাইরে অবাঙালী দর্শকের মনোরঞ্জন করলেও ভাষার ভিন্নতার জন্য সেগুলি সাধারণ দর্শকের কাছে সুবোধ্য হয় নি। সেজন্য অন্যান্য ভাষায় তাঁর নাটকের অনুবাদ হচ্ছে। কিন্তু সংস্কৃত ভাষায় রবীন্দ্রনাথের নাটক অনুবাদ হ'লে সেই নাটক সর্বভারতীয় দর্শকের চিত্ত অধিকার করতে পারে। বিশেষ করে ভারতের বাইরে সংস্কৃত অনুবাদের উপযোগিতা সর্বাপেক্ষা বেশী, কারণ পৃথিবীর প্রায় সর্বত্র ভারতীয় ভাব ও সংস্কৃতির বাহনরূপে সংস্কৃত ভাষা অধীত ও আলোচিত হচ্ছে।

সংস্কৃত ভাষায় মূল বাংলা ভাষার রূপও অনেকখানি বজায় রাখা সম্ভব, কারণ বাংলা ভাষায় বিশেষ করে রবীন্দ্রনাথের ভাষায় শতকরা পঞ্চাশটি শব্দের বেশীই সংস্কৃত। তদ্ভব শব্দগুলি ও তৎসম শব্দের সঙ্গে রূপ ও ধ্বনি নৈকট্যের জন্য সংস্কৃতজ্ঞ ব্যক্তির কাছে অনায়সবোধ্য। আলোচ্য নাটক 'মুক্তধারা'র কথাই উল্লেখ করা যাক্। মুক্তধারার কয়েকটি গান, যথা ভৈরবপন্থীদের গান ও মন্ত্রের প্রশস্তিসূচক গান সংস্কৃত শব্দবহুল। ..........সুতরাং সংস্কৃত অনুবাদের মধ্য দিয়ে রবীন্দ্র নাটকের ভাব ও ভাষারূপ সার্থকভাবে বাংলা ভাষায় অনভিজ্ঞ ব্যক্তির মনে বাহিত হতে পারে। আলোচ্য নাটকের প্রস্তাবনায় যা বলা হয়েছে তা সমর্থনযোগ্য—"অতো নিখিলে ভারতে তথাখিলে জগতীতলে রবীন্দ্র ভাবধারা-প্রচারণেঽপি সংস্কৃতমেব যোগ্যতমা ভাষা।"

'মুক্তধারা' রবীন্দ্রনাথের অন্যতম শ্রেষ্ঠ নাটক। যুগোপযোগী সমস্যার সার্থক রূপায়ণের জন্যই শুধু শ্রেষ্ঠ নয়, নাটকীয় দ্বন্দ্ব, উত্তেজনা ও গতি-বেগের দিক দিয়ে এর শ্রেষ্ঠত্ব অবিসংবাদিত। 'মুক্তধারা' অঙ্কদৃশ্যহীন নাটক। সংস্কৃত দশরূপকের অঙ্ক নামক রূপকের সঙ্গে এই নাটকের সাদৃশ্য উল্লেখ করা যায়। অঙ্কদৃশ্য না থাকার ফলে এই বিচিত্র ঘটনা-বহুল নাটকের ঘটনার মধ্যে একটি অবিচ্ছিন্ন গতিশীল রূপ দেখা যায়। সংস্কৃত অনুবাদের মধ্যেও নাটকের এই গতিশীলতা ক্ষুণ্ণ হয়নি। অনু-বাদকের নাট্যরসবোধ ও ভাষাজ্ঞানের ফলেই তা সম্ভব হয়েছে।

ধ্যানেশ নারায়ণ শুধুমাত্র অনুবাদক নন, তিনি স্বয়ং নিপুণ ভাষাশিল্পী ও রসস্রষ্টা। গদ্যভাষার অনুবাদ অপেক্ষাকৃত সহজ। কারণ সেখানে বাংলা পদের স্থলে সংস্কৃত পদ বসিয়ে গেলেই চলে, কিন্তু কবিতা ও গানের অনুবাদ কঠিন, কারণ সেখানে ছন্দোবোধ, কাব্যিক শব্দ প্রয়োগ ও বাক্য বিন্যাসের প্রয়োজন। মুক্তধারা নাটকে ধনঞ্জয় বৈরাগীর যে গানগুলি রয়েছে সেগুলি বাংলা ভাষারূপের সঙ্গে এমনি অবিচ্ছেদ্যভাবে যুক্ত যে সেগুলির ভাষান্তর সাধন করা খুবই কষ্টসাধ্য। কিন্তু অনুবাদকের রসবাহী শব্দ প্রয়োগ গুণে সংস্কৃত ভাষায় গানগুলি নূতন সৌন্দর্যে মণ্ডিত হয়ে উঠেছে। ..........মূল ভাষায় শব্দগুলির সুপ্রয়োগের ফলে অনুবাদ শ্রুতিমধুর ও রসাশ্রিত হয়েছে। আলোচ্য অনুবাদ মূলের প্রতি সম্পূর্ণ বিশ্বস্ত, শুধু কেবল সংস্কৃত নাটকের রীতি বজায় রাখবার জন্য একটী প্রস্তাবনা অংশে নান্দীর মধ্য দিয়ে রবীন্দ্রনাথের প্রশস্তি রচিত হয়েছে এবং সূত্রধার ও নটীর কথোপকথনের মধ্যে সংস্কৃত ভাষায় রবীন্দ্র নাটক প্রচারের প্রয়োজনীয়তা ও সার্থকতার কথা উল্লেখ করা হয়েছে। প্রস্তাবনা অংশে অনুবাদকের মৌলিক রচনাশক্তিও প্রশংসনীয়।

—অজিত কুমার ঘোষ

দৈনিক বসুমতী, রবিবার, ১১ই আশ্বিন ১৩৭১

রবীন্দ্র সাহিত্যে সংস্কৃত সাহিত্যের প্রভাব সুস্পষ্ট। ভাবে, ভাষায়, ছন্দে, মাধুর্যে অনবদ্য রবীন্দ্র সাহিত্য দেবভাষার স্পর্শে হয়েছে ঐশ্বর্যমণ্ডিত। সংস্কৃত সাহিত্যের সাথে পরিচয় না থাকলে যেমন রবীন্দ্র-সাহিত্যের রস গ্রহণ করা অসম্পূর্ণ থেকে যায়—তেমনি সংস্কৃত সাহিত্যের যে বিস্তারিত আলোচনা রবীন্দ্রনাথ করেছেন সেগুলি সংস্কৃত সাহিত্য-পরিচয়ে অপরিহার্য্য। এক অচ্ছেদ্য বন্ধনে বাঁধা পড়েছেন মাতা-পুত্রী, সংস্কৃত ও বাংলা সাহিত্য রবীন্দ্র প্রতিভার মাধ্যমে। রবীন্দ্র সাহিত্যকে সংস্কৃত ভাষায় রূপান্তরিত করার প্রশংসনীয় প্রয়াস সে বন্ধনকে দৃঢ়তর করেছে। শ্রীধ্যানেশনারায়ণ চক্রবর্তীর বর্তমান আলোচ্য গ্রন্থ এমনি একটি সার্থক অনুবাদ।

বিশ্ব কবির 'মুক্তধারা' নাটকের নতুন করে পরিচয় দেবার প্রয়োজন নেই। এই নাটকের বক্তব্যের গভীরতা ভাবের অন্তর্দর্শী আকুলতা বিশ্বের বিদগ্ধ জনচিত্তে সাড়া জাগিয়ে আসছে প্রথম প্রকাশ কাল হতে অদ্যাবধি।

বিশ্বের সকল ভাষায় অনুবাদ হয়েছে রবীন্দ্র সাহিত্যের। তবে সাধারণতই রবীন্দ্র সাহিত্য-ভক্তকে পূর্ণ তৃপ্তি দিতে পারে না এই সব অনুবাদ কাব্য। কোথায় যেন মূল সুরের পার্থক্য ঘটে গভীরতায়। শ্রীধ্যানেশনারায়ণ চক্রবর্তী অনুবাদিত সংস্কৃত 'মুক্তধারা' সম্পূর্ণ সার্থক একটি অনুবাদ গ্রন্থ। বাংলায় যার মূল স্বরূপ, সংস্কৃতে তার ভাব প্রকাশ অক্ষুণ্ণ আছে। অনুবাদের আড়ষ্টতা, রূপান্তরের অস্পষ্টতা নেই এর কোনখানে। প্রসঙ্গতঃ উল্লেখযোগ্য, এই লেখক রবীন্দ্রনাথের 'ডাকঘর'-এরও সার্থক অনুবাদ করে পূর্বেই যশস্বী হয়েছেন। বর্ত্তমান গ্রন্থে তাঁর সেই যশঃসৌরভ আরও বৃদ্ধি পেয়েছে।

মাসিক বসুমতী, আষাঢ় ১৩৭১

মুক্তধারা—

আলোচ্য পুস্তকটি এক অনুবাদকর্ম। রবীন্দ্রনাথের মুক্তধারা নাটকের সংস্কৃত অনুবাদ করেছেন লেখক, অনুবাদ কর্মের যা প্রধান সম্পদ সেই সাবলীলতা এতে পরিপূর্ণরূপেই বর্তমান এবং বিশেষ করে সেই জন্যেই এই রচনাকে স্বচ্ছন্দে শিল্পোত্তীর্ণরূপে অভিহিত করা যায়। বলা বাহুল্য যে, রবীন্দ্ররচনার অন্তর্নিহিত ব্যঞ্জনাকে সুষ্ঠুভাবে ভাষান্তরিত করাটা বড় সহজসাধ্য নয়, কিন্তু বর্তমান অনুবাদক সে ক্ষেত্রে সম্পূর্ণরূপে সফল হয়েছেন। রবীন্দ্ররচনাকে বর্ত্তমানে নানা ভাষায় অনূদিত করা হচ্ছে। কিন্তু সেসব ভাষার অধিকাংশই বিদেশী; স্বদেশের পুরাতন সংস্কৃতির প্রতীক সংস্কৃত ভাষায় রবীন্দ্র-প্রতিভাকে মূর্ত করার প্রচেষ্টা যে একান্ত রূপেই প্রশংসনীয় সে সম্বন্ধে সন্দেহ মাত্র নেই, বর্তমান অনুবাদক সেক্ষেত্রে প্রভূত সাধুবাদের অধিকারী।

প্রবর্ত্তক, অগ্রহায়ণ ১৩৭১

দরদী কবির এমন একখানি রূপকাশ্রয়ী, ভাবসমৃদ্ধ ও ধ্বন্যাত্মক সংলাপবহুল নাটকের ভাষান্তর-প্রয়াস প্রশংসনীয় হলেও নিতান্ত সহজ-সাধ্য নয়। বিশেষ করে সে ভাষা যদি এমন একটি ভাষা হয়, যাকে দেশের জনসাধারণ দেবভাষা রূপে ভীতিমিশ্রিত সম্ভ্রম জানিয়ে দূরে সরিয়ে রেখেছে বহু শতাব্দী ধরে, প্রাত্যহিক জীবনের কার্যসূচীতে যার অনুপ্রবেশ প্রায় নিষিদ্ধ, তবে সে অনুবাদকার্য নিতান্ত দুরূহ বা অবাস্তব বলে মনে হওয়াও অস্বাভাবিক নয়। অবশ্য সঙ্গে সঙ্গেই একথা মনে রাখা কর্ত্তব্য যে উপনিষদের ভাবধারায় পরিপুষ্ট, বাল্মীকি, বেদব্যাস ও কালিদাসের সাহিত্য সম্পদে সমৃদ্ধ রবীন্দ্রসাহিত্যের অনুবাদের বাহনরূপে সংস্কৃত ভাষার দাবী সর্বাগ্রগণ্য। কেননা সেক্ষেত্রে অনুবাদে মূলের সহিত ভাবগত ঐক্য, রূপকল্পনার সাদৃশ্য ও কবির মৌলিকত্ব ও স্বাচ্ছন্দ্য অব্যাহত থাকার সম্ভাবনা বেশী। কিন্তু সংস্কৃত ভাষার এই অনুবাদ-যোগ্যতা যোগ্য হস্তপ্রয়োগের অপেক্ষা রাখে বৈকি। তবে এই যোগ্যতার পরীক্ষায় বিদগ্ধ অধ্যাপক ধ্যানেশ নারায়ণ চক্রবর্তী সপ্রশংসভাবেই ইতিপূর্বে উত্তীর্ণ হয়েছেন। তাঁর 'বার্তাগৃহম্' রবীন্দ্রনাথের ডাকঘরের সংস্কৃতানুকল্পন সুধীসমাজে সাধুবাদ পেয়েছে, পেয়েছে আন্তর্জাতিক খ্যাতি। বর্তমান অনুবাদটিও চমৎকার। সহজ এবং সুললিত শব্দচয়ন এবং যথেষ্ট মূলানুগামিত্বই বোধ হয় ইহার চমৎকারিত্বের কারণ। সর্বাগ্রে যে প্রশ্নটি উত্থাপিত হতে পারতো, সবশেষে তার অবতারণা করে এবং সম্ভাব্য উত্তর দেবার চেষ্টা করে আলোচনা শেষ করছি। প্রশ্নটি এই এ অনুবাদের কী প্রয়োজন ছিল? এক কথায় এর জবাব বোধ হয়, যা সুন্দর, যা মধুময় নবতররূপে তারই আস্বাদন। পদ্ম সুন্দর সরোবরে, গোলাপ সুন্দর সাজানো বাগানে, এতে কারো সন্দেহ নেই। কিন্তু এদেরই যখন দেখি টেবিলের ফুলদানীতে অথবা মালাকারের তৈরী সুবিন্যস্ত ফুলমালিকায়, তখন কি এরা অসুন্দর? নিশ্চয়ই না। একই সুন্দরকে বিভিন্ন পরিবেশে আস্বাদন করে মানুষ তৃপ্ত করে তার সৌন্দর্য পিপাসাকে, চরিতার্থ করে তার শিল্পীমনকে। তাই সাহিত্যের অনুবাদ সাহিত্যিকের খ্যাতিকে দূর প্রসারী করবার সাথে সাথে পুষ্ট করে পাঠকের

সাহিত্য-সম্ভোগকে। আর একটি কথা এই যে, একটা জাতির সংস্কৃতি বেঁচে থাকে তার জীবন্ত ঐশ্বর্যের উপরে নির্ভর করে। ভারতের ঐতিহ্য-বিমণ্ডিত সংস্কৃতির ধারক ও বাহক সংস্কৃত ভাষা, তাই এ ভাষাকে মৃত ভাষা বলে সমাহিত করে রাখলে বহু বিচিত্র সংস্কৃতির মিলন-তীর্থ এই ভারতের সাংস্কৃতিক অপমৃত্যুকেই ডেকে আনা হবে। তাছাড়া সংস্কৃত ভাষা প্রায় সমগ্র ভারতীয় ভাষার জননীস্থানীয়া। আজকের স্বাধীন ভারতের ভেদবুদ্ধি যখন জাতীয় সংস্কৃতিকে গ্রাস করতে উদ্যত, তখন সর্বভারতীয় ঐক্য ও সংস্কৃতির প্রয়োজনেও সংস্কৃত ভাষার চর্চা হওয়া একান্ত আবশ্যক এবং এই পবিত্র কর্তব্য পালনের বাহনরূপে বিশ্ব কবির কালজয়ী সাহিত্যের সংস্কৃত রূপায়ণ এক যুগোপযোগী বাস্তব পরিকল্পনারূপে বিবেচিত হওয়া বাঞ্ছনীয়।

বর্তমান ভারতে দেবভাষা সংস্কৃতকে সর্বজনবোধগম্য আদরণীয় করবার দুরন্ত প্রয়াসে যাঁরা জীবনপাত করে চলেছেন—অধ্যাপক ধ্যানেশ নারায়ণ তাঁদের অন্যতম। তাঁর এই অনুবাদ যেমন সংস্কৃত প্রচার এবং ভারতীয় সংস্কৃতি প্রসারে একটি বিশেষ ভূমিকা গ্রহণ করেছে, তেমনি তাঁর বাংলা ও সংস্কৃত সাহিত্যে অনন্যসাধারণ অধিকার প্রমাণিত করেছে। বিশেষতঃ অনুবাদ সাহিত্যের ক্ষেত্রে এইটি একটি উল্লেখনীয় সার্থক সংযোজন। মূলের ভাব, ভাষা এবং রসের বৈশিষ্ট্য ভাষান্তরেও রক্ষা করার দুরূহ পরীক্ষায় তিনি উত্তীর্ণ হয়েছেন। সাহিত্যরসিক ও ভারতপ্রেমিক সজ্জনদের তিনি যথেষ্ট সাধুবাদের যোগ্য। পৃথিবীর বিভিন্ন ভাষায় রবীন্দ্র সাহিত্যের যে সকল অনুবাদ হয়েছে, তার মধ্যে বর্তমান অনুবাদ অনন্যসাধারণ। 'প্রাক্-কথনম্' অংশে রবীন্দ্রমানস ও সংস্কৃত নিয়ে তাঁর তথ্য সমৃদ্ধ আলোচনাটি অনবদ্য। রবীন্দ্র-সাহিত্যের এবং বঙ্কিমচন্দ্র প্রভৃতির বিখ্যাত রচনাবলীর আরো সংস্কৃত অনুবাদ আমরা অধ্যাপক চক্রবর্তীর কাছে আশা করি। জাতীয় সরকার এই সকল গ্রন্থ প্রকাশে এবং অভিনয়ে অগ্রণী হইলে দেশবাসী সুখী হইবে। ভারতের ভাবগত সংহতি সাধনে অধ্যাপক চক্রবর্তীর এই অনুবাদ একটী বিশিষ্ট স্থান অধিকার করে থাকবে।

**শ্রীসুদর্শন**, ভাদ্র-১২৭১

বিশ্বকবি রবীন্দ্রনাথের মুক্তধারা একটি প্রসিদ্ধ নাটক। নাটকের বিষয়বস্তু প্রচলিত সাধারণ নাটক হইতে ভিন্ন ধরণের। অতি গূঢ় ইহার মর্মকথা। বিদ্বজ্জন-আস্বাদ্য এই নাটকটির অভিব্যঞ্জনা যেমন অনন্যসাধারণ তেমনি সাহিত্যের যে সূক্ষ্ম কারুকার্য দ্বারা ইহা অলঙ্কৃত তাহার তুলনাও বিরল। একমাত্র রবীন্দ্রনাথের পক্ষেই সম্ভব এইরূপ একটি নাটক রচনা করা।

এহেন গ্রন্থের সংস্কৃতানুবাদ, গ্রন্থের বৈশিষ্ট্য এবং প্রকাশ ভঙ্গিমা রক্ষা করিয়া—তাহা বড় সহজ কথা নহে। কিন্তু একথা মুক্ত কণ্ঠে স্বীকার করিতে হইবে যে, অনুবাদক পণ্ডিত প্রবর অধ্যাপক মহাশয় এবিষয়ে সর্বতোভাবেই কৃতকার্য হইয়াছেন। তাঁহার এই কৃতিত্ব একান্তই প্রশংসার্হ। অনুবাদ কার্যে মূলের সৌন্দর্য মাধুর্য অনেক ক্ষেত্রেই সুষ্ঠুভাবে রক্ষা করা সম্ভব হয় না, কিন্তু আলোচ্য গ্রন্থখানা যে ইহার ব্যতিক্রম একথা না বলিয়া উপায় নাই। আমরা আশা করিতেছি, গ্রন্থকার রবীন্দ্রনাথের আরো কোন কোন গ্রন্থের সংস্কৃত অনুবাদ করিয়া সুধীজনের তৃপ্তি সাধন করিবেন। এ সম্বন্ধে রবীন্দ্রনাথের 'ডাকঘর' নাটকটির কথা মনে উদিত হইতেছে।

**প্রণব**, জ্যৈষ্ঠ-১৩৭২

অধ্যাপক মহোদয়ের মুক্তধারা নাটকটি উৎসাহ ও মনোযোগের সহিত অধ্যয়ন করিলাম। বিশ্ব কবি রবীন্দ্রনাথের এই নাটকখানি বহু ভাষায় অনূদিত হইয়া পাশ্চাত্ত্য মনীষিগণের দৃষ্টি আকর্ষণ করিয়াছে। এইরূপ নাটক ভারত সংস্কৃতির স্থায়ী প্রতীক রূপে ভারতীয় জনসমাজের সম্মুখে উপস্থাপন করা আবশ্যক। অধ্যাপক মহাদয়ের সংস্কৃত অনুবাদ দ্বারা সেই কার্য সুসিদ্ধ হইবে।

অধ্যাপক মহোদয় সংস্কৃত ভাষা ও সাহিত্যের বিশেষ অনুরাগী। ভারত রাষ্ট্রের রাষ্ট্রভাষা কি হইবে এই প্রশ্ন লইয়া যখন সমগ্র ভারতের নেতৃবৃন্দ বিভ্রান্ত তখন ভাষা সমস্যার চূড়ান্ত সামাধান রূপে সংস্কৃত ভাষাকে জাতীয় ও রাষ্ট্রীয় ভাষারূপে গ্রহণ করিবার সার্বভৌমিক অকাট্য যুক্তি প্রদর্শন পূর্বক তিনি সমাধানের দিগ্‌দর্শন দান করিয়াছেন।

অধ্যাপক মহোদয়ের ভাষা সরল, সাবলীল, প্রাঞ্জল ও মূলানুগত। অনুবাদ নাটকটি পাঠ করিয়া পাঠক বাংলা রচিত বিশ্বকবির মূল নাটকের রস সম্যক আস্বাদন করিতে পারিবেন! আমরা আশা ও প্রার্থনা করি— অধ্যাপক মহোদয়ের সেবা নিষ্ঠায় সংস্কৃত সাহিত্য স্বীয়গৌরব পুনরুদ্ধারে সামর্থ্য অর্জন করুক্।

উদ্বোধন, জ্যৈষ্ঠ-১৩৭৩

ভারত-সংস্কৃতি ও সংস্কৃত ভাষা এক হিসেবে সমার্থক। সংস্কৃতের ধ্রুপদী পটভূমি না থাকলে এ দেশের জীবন, মনন, সাহিত্য বা সাধনা কোনটিই পূর্ণতা পায় না। সংস্কৃত অধিকাংশ আধুনিক ভারতীয় ভাষার জননীস্বরূপা, বর্তমান ভারতবর্ষের চিরন্তন ভাব-উৎস। ভাষাশাস্ত্রের পণ্ডিত মণ্ডলী ইন্দো-ইউয়োপীয় ভাষাতত্ত্বের মূলান্বেষণে 'সংস্কৃত' চর্চার দ্বারাই সবচেয়ে বেশী লাভবান হয়েছেন। ভারতীয় ভাষাসমূহের সব সমৃদ্ধির সবচেয়ে বড়ো কারণ সংস্কৃতের বিপুল ঐশ্বর্যময় ঐতিহ্য। স্বাভাবিক-ভাবেই সংস্কৃতের এই বহুযুগব্যাপী ধারণীশক্তি লক্ষ্য করে একালের বিদ্বন্মণ্ডলীর এক উল্লেখযোগ্য অংশ রাষ্ট্রভাষার বিরোধ নিরসনে সংস্কৃতের প্রতি দৃষ্টিপাত করে থাকেন। স্বামী বিবেকানন্দের রচনাবলীর নানা ক্ষেত্রে জাতীয় জীবনে সংস্কৃতের গুরুত্বপূর্ণ ভূমিকার কথা উল্লেখিত। বিশেষতঃ তাঁর পরিকল্পিত ও আংশিক লিখিত 'India's message to the world' গ্রন্থের সূচনায় ভারতবর্ষের ভাষাগত ঐক্য সম্বন্ধে তাঁর মন্তব্য আজকের দিনে বিশেষ প্রণিধানযোগ্য—"এমন একটি মহান পবিত্র ভাষা গ্রহণ করিতে হইবে অন্য সমুদয় ভাষা যাহার সন্ততিস্বরূপ। সংস্কৃতই সেই ভাষা। ইহাই ( ভাষা সমস্যার ) একমাত্র সমাধান।"

কোন বিশ্রুতকীর্তি লেখকের রচনাকে সংস্কৃতে অনুবাদের অর্থ সর্বভারতীয় ভাবলোকের সঙ্গে তার সংযোগ-সাধন। কবি সার্বভৌম রবীন্দ্রনাথ তো সংস্কৃতানুবাদের ক্ষেত্রে সে হিসাবে সবচেয়ে আকর্ষণীয় লেখক। আধুনিক বাংলায় সংস্কৃতের সবচেয়ে সার্থক প্রভাবের নিদর্শন রবীন্দ্ররচনাবলী। ভাষার নিজস্ব প্রতিভার সঙ্গে কবিব্যক্তিত্বের অলৌকিক ব্যঞ্জনায় মিশে রবীন্দ্রনাথ যেমন বাংলার কবি, তেমনি সংস্কৃত সাহিত্যের অন্যতম শ্রেষ্ঠ উত্তরাধিকারী।

রবীন্দ্র ভারতী বিশ্ববিদ্যালয়ের অধ্যাপক শ্রীধ্যানেশ নারায়ণ চক্রবর্ত্তী এর আগেই রবীন্দ্রনাথের 'ডাকঘর' অনুবাদ করে সুধীজনের প্রীতি অর্জন করেছেন। তাঁর 'মুক্তধারা' নাটকের সুন্দর সাবলীল অনুবাদটিও সহৃদয় সাহিত্যানুরাগীদের প্রশংসা ধন্য হবে, সন্দেহ নেই। অনুবাদ মূলানুগ, অথচ অনুবাদকের অনায়াস নৈপুণ্যে মূল রচনার সৌরভ ও সৌন্দর্য অক্ষুণ্ণ। 'মুক্তধারা' নাটকের বন্ধনমুক্তির আদর্শ সর্ব ভারতীয় সংস্কৃতের স্পর্শে নবীনতর সার্থকতা লাভ করেছে।

প্রসঙ্গতঃ মনে পড়ছে, বাংলা মূল রচনায় সাধারণ মানুষের মুখের ভাষার দেশজ সারল্য সংস্কৃত অনুবাদে রক্ষা করা কঠিন। সেদিক থেকে সংস্কৃত নাটকের প্রাকৃত সংলাপ প্রয়োগের কৌশল আরো সহায়ক হ'তে পারে।

এ যুগের বঙ্গসংস্কৃতিকে যাঁরা সংস্কৃত ভাষার পুণ্য গঙ্গোদকে অভিষিক্ত করার ব্রত গ্রহণ করেছেন, তাঁদের অন্যতম পুরোধারূপে 'মুক্তধারা'র অনুবাদক অধ্যাপক ডক্টর ধ্যানেশ নারায়ণ চক্রবর্ত্তী আন্তরিক অভিনন্দনযোগ্য। সংস্কৃতে রূপান্তরিত মুক্তধারা ব্যক্তিগত ও সমষ্টিগত গ্রন্থাগার সমূহের সম্পদ বৃদ্ধি করুক—এই প্রার্থনা।

প্রণব রঞ্জন ঘোষ

**संस्कृत साहित्य परिषत्, July, 1964**

अहो प्रमोदः, संस्कृतविद्यावतां विपश्चिद्वर्य्याणां यत्—कवीन्द्र-रवीन्द्रनाथस्यामृत-निष्यन्दिन्या लेखन्या निःसृताया वङ्गभाषामय्या "मुक्तधारायाः"संस्कृतभाषयानुवाद-रूपमभिनवं रूपान्तरमेकं वहिरात्मप्राकाश्यमलभत एम्.ए.वि.टि. इत्युपाधिमत्या श्रीमत्या ऊषादेव्या सद्य इति ।

अध्यापक प्रवरेण श्रीमता डः ध्यानेशनारायण चक्रवर्त्ति साहित्यशास्त्रिणा नवीनेनापि प्रवीणतमेनेवास्या मुक्तधारायाः संस्कृतभाषायां योऽनुवादो विहितः, स खलु वाचनमात्रेणैव सुमनसां विदुषां मनः सरसं विदध्यादिति यद्यप्यत्र नापेक्ष्यते वक्तव्यान्तरं किमपि, तथापि तद्गुणाकृष्टहृदयतया नाभणित्वा स्थातुमलमिति यत्किञ्चिदुच्यते ।

यस्याः कस्याश्चिदपि भाषाया भाषान्तरीकरणरूपं परिवर्तनं दुष्करम् । तत्र पुनः संस्कृतभाषायां परिवर्तनमति दुष्करमेवेति को वा सहृदयो न जानीते । अनुवाद साहित्येषु यदि नाम भाषागतानि भावगतानि रसगतानि च वैशिष्ट्याणि याथातथ्येन रक्षितुं शक्येरन्, तदैवानुवादस्य प्राशस्त्यं नेतरथा । नवीनस्याप्यनुवादकस्यास्य तत्तादृशानां सर्वेषामेव विषयाणां प्रायेणोपपत्तिरत्राव्याहतास्ते । किञ्च संस्कृत-भाषायां मुक्तधाराया अनुवादेनानेन संस्कृतसाहित्यानां सृष्टौ परितुष्टौ चास्यानु-वादकस्य दानममूल्यमिति मन्ये । ततश्च श्रीमानयं वस्तुत एव समजनिष्ट प्रशंसा-भाजनं जनगणेषु । वयं सस्नेहाशिषा श्रीमन्तं संयोज्यास्य भाविन्याः कर्मपद्धतेः साफल्यं कामयमानाः परमेशितुः प्रसादपरम्परामस्मिन् प्रार्थयामहे ।

श्रीरामधन शास्त्री

# वार्तागृहम्

## "प्रस्तावना"*

### 'नान्दी'

कल्याणीं शुभ्रहासां ललितरसमयीं मौलिवद्धेन्दुलेखां
मुक्ता-स्रक्-मण्डिताङ्गीं सरसिज-निलयां काशकुन्दाब्जकान्तिम् ।
हंसस्थामम्बुजाक्षीं शशधर-वदनां शुद्ध-सत्त्व-प्रकाशां
वन्दे श्रीब्रह्मविद्यां सुर-मनुज-नुतां चिन्मयीं ध्यानगम्याम् ।।

वाग्देव्याः पादलग्ने सितकमलवने सञ्चरन् पुण्यकीर्तिर्-
वीणारावैः सुगीतैः कलरवमुखरं पूरयन् दिग्दिगन्तं ।
ज्योतिर्दीप्तो वरेण्यः शुभजयतिलकैर्मण्डितो विश्ववन्द्यः
सोऽयं जीयाच्चिरं नो निखिल-भुवन-मणिः श्रीरवीन्द्रः कवीन्द्रः ।।

[ नान्द्यन्ते ]

सूत्रधारः—अहो, अद्य खलु कविसार्वभौमस्य रवीन्द्रनाथस्य जन्मशतवार्षिकीमुपलक्ष्य तस्य 'डाक्घर्' इति नाटकस्य संस्कृतानुकल्पनं वार्तागृहमस्माभिरभिनीयते ।

नटी—आर्य, कथं संस्कृतानुकल्पनं, केन वा तदनूदितम् ?

सूत्रधारः—या खलु शाश्वती भारतीया संस्कृतिः कविवर्येण वन्दिता नन्दिता समादृता च, तस्याश्च चिरन्तनधात्रीयं सुरवाणी संस्कृतभाषा। अतः संस्कृतानुवादोऽस्माभिरभिनीयते ।

तत्काव्यं मधुनिर्झरोपममिदं विद्वज्जनानन्ददं
चित्त्वा वै करुणा-रसैक-कथिकां भावोच्छलां मर्मगाः ।
चक्रे संस्कृतभाषयानुरचितं नाट्यानुवादं कवेः
श्रीविश्वेश्वरशर्मदीततनयो ध्यानेशनारायणः ।।

इति प्रस्तावना

---

*प्रस्तावना अनुवादकेन प्रकल्पिता

माधवदत्तः—विपदमापन्नोऽस्मि। यदा स नासीत्, तदा नासीदेव, कापि चिन्तापि नासीत्। अधुना कुत आगत्य स कक्षं मे पूरितवान्। गते तस्मिन् कक्षं मे न कदापि कक्षं स्यात्। भिषङ्महोदय, भवता किं मन्यते यद् अमुम्……।

भिषक्—यदि अस्य भागधेये आयुर्वर्तते, तदायं सुचिरं जीवेत्। आयुर्वेदे तु यादृशं लिखितं, तेन तु……।

माधवदत्तः—किमुच्यते भवता।

भिषक्—शास्त्रेपूक्तं यद् "पैत्तिकान्, सन्निपातजान् कफवातसमुद्भवान्"…।

माधवदत्तः—अलमलम्। मा कुरु तेषां श्लोकानां पुनरावृत्तिम्। तेन भीतिर्मे नितरां वर्धते। अधुना, किं करणीयं तदेवोच्यताम्।

भिषक्—( नस्यं गृहीत्वा ) अतीव सावधानसौ रक्षितव्यः।

माधवदत्तः—सुष्ठूक्तम्। अपि तु कस्मिन्नु विषये सावधानेन भवितव्यं, तदेव स्थिरीकृत्य निर्दिश्य च ततो गम्यताम्।

भिषक्—तस्य वहिर्गमने न कदापि अनुमतिः प्रदेयेति मया प्रागेवोक्तम्।

माधवदत्तः—असौ तु चञ्चलः किशोरः। अहर्निशं गृहे तस्य अवरोधो नितरामायाससाध्यः।

भिषक्—तर्हि कथयतु किं भवता करिष्यते? अस्य शरत्कालस्य रौद्रं वायुश्च उभयमेव वालकस्य विषतुल्यम्। यतः शास्त्रे उक्तम्—"अपस्मारे ज्वरे काशे कामलायां हलीमके"…

माधवदत्तः—अलमलं श्लोकसमुद्गिरणेन। तिष्ठतु तावत् भवतः शास्त्रम्। तर्हि किमसौ गृहे सुनिश्चितमवरोद्धव्यः? नास्ति अन्यः कोऽपि उपायः?

भिषक्—नास्त्येव, यतः—"पवने तपने चैव—"

माधवदत्तः—भवतस्तेन 'चैव' इत्यनेन मम किं भविष्यतीति उच्यताम्। तिष्ठतु तावत् प्रवचनम्। किं करणीयं तदेव निर्दिश्यताम्। परं सुकठोरं भवतो व्यवस्थापनम्। रोगस्य सकलानेव क्लेशान् असौ वराको तूष्णीमेव संसहते। अपि तु भवदुपदिष्टम् औषधं सेवमानस्यास्य कष्टं दृष्ट्वा वक्षो मे विदीर्यते।

भिषक्—यादृशं तस्य कष्टस्य प्रावल्यं तादृशमेव फलस्य प्राचुर्यम्। अतो

महर्षिणा च्यवनेनोक्तम्—"भेषजं हितवाक्यं च तिक्तमाशु फलप्रदम् ॥" दत्त-महोदय, अद्य तावत् प्रचलामि। (प्रस्थानम्)

[ पितामहदेवस्य प्रवेशः ]

माधवदत्तः—अहो, पितामहः समागतः ? सर्वनाशः संघटितः।

पितामहः—कथम् ? किमर्थं त्वं मत्तो विभेषि ?

माधवदत्तः—त्वं हि किशोरान् उत्तेजयितुं सुदक्षो नायकविशेषः।

पितामहः—न त्वं किशोरः, नास्ति च गृहे तव कोऽपि किशोरकः। अतः का ते चिन्ता ?

माधवदत्तः—गृहे तु आनीतः कश्चित् किशोरकः।

पितामहः—कथमेतत् ?

माधवदत्तः—मम पत्नी तु कृतकपुत्रग्रहणार्थमत्युत्साहवती संजाता।

पितामहः—चिरात् तन्मया श्रुतम्। परं त्वं तु कृतकं ग्रहीतुं न वाञ्छसि।

माधवदत्तः—ज्ञायते त्वया भ्रातर्यद्—कठोरेणायासेन अर्जितो मयार्थः। अन्यस्य पुत्रः कुतोऽपि आगत्य मे आयासलब्धस्य वित्तस्यानायासमेव क्षयं नेष्यतीति चिन्तयतो मे मनः क्लिष्टमभूत्। किन्तु बालकेऽस्मिन् किमपि प्रसक्तोऽस्मि।

पितामहः—तेन अस्य कृते व्ययं कुर्वता त्वया अर्थस्य सौभाग्यमिति मन्यते।

माधवदत्तः—आसीत् प्रागर्थोपार्जने व्यसनासक्तिरिव। तदकुर्वता मया स्वस्थे स्थातुं न शक्यम्। इदानीं तु उपार्जितं वित्तं सर्वमेवासौ प्राप्स्यतीति जानन् उपार्जने प्रभूतमानन्दमुपगच्छामि।

पितामहः—साधु साधु। तर्हि कथय किशोरोऽयं कुतः सम्प्राप्तः।

माधवदत्तः—स हि मद्भार्यायाः ग्रामसम्पर्केण भ्रातुष्पुत्रः। आशैशवान्मातृहीनश्च। किञ्च कियद्दिनेभ्यः प्राक् तातस्तस्य पञ्चत्वमुपगतः।

पितामहः—अहह। तर्हि अस्ति मे प्रयोजनं तेन।

माधवदत्तः—तस्य अमुष्मिन् क्षीणे शरीरे वातपित्तश्लेष्मादीनां समवेत-भावेन यादृशः प्रकोपस्तेन तस्य जीवनाशा न दृश्यते इति भिषङ्महो-दयेनोच्यते। केनाप्युपायेन शरद आतपाद् वाताच्च तं संरक्ष्य गृहरोधकरणमेव अधुना केवलम् उपायः। किशोराणां गृहाद् वहिरानयनमेव वृद्धस्य ते लीला। अतस्त्वत्तो विभेमि।

पितामहः—नानृतं त्वयोक्तम्। भृशं भीषणां सञ्जातोऽहं शरदः आतपवत् वायुतुल्यश्च। अपि तु भ्रातः, गृहरोधकरणार्थम् क्रीडाऽपि मया ज्ञायते। अधुना अपरं कार्यादिकं समाप्य आगमिष्यामि, तदनन्तरं तेन किशोरेण सह मैत्रीं स्थापयिष्यामि।

[ अमलगुप्तस्य प्रवेशः ]

अमलः—तात!

माधवदत्तः—किं कथयितुमिच्छसि वत्स? कथय अमल!

अमलः—किमहं दृश्यमानमङ्गनमपि गन्तुं न शक्नोमि?

माधवदत्तः—नहि वत्स।

अमलः—अमुत्र यत्र पितृष्वसा यन्त्रेण शस्यपेषणं करोति, पश्य यत्र शस्य-चूर्णाणि हस्तद्वयेन संगृह्य काष्ठविडाली लाङ्गूलोपरि देहभारं समर्प्य चोपविश्य "कुटुस् कुटुस्" इति शब्दं कृत्वा खादति नाहं तत्र गन्तुमर्हामि?

माधवदत्तः—न हि वत्स।

अमलः—यद्यहं काष्ठविडाली भूयां, तदैतत् उत्तमम् अभविष्यत्। तात कथं न मे वहिर्गन्तव्यम्?

माधवदत्तः—वत्स, वहिर्गमने ते पीडा भविष्यतीति भिषङ्महोदयेनोक्तम्?

अमलः—तत्रभवता तत् कथ ज्ञातम्?

माधवदत्तः—अमल, किमुच्यते त्वया? भिषङ् न जानाति? तेन तु सुवृहद्ग्रन्थादिकं पठितम्।

अमलः—पुस्तकपठनेन किं सर्वमेव ज्ञायते?

माधवदत्तः—अहो, किं तदपि त्वया न ज्ञायते?

अमलः—(दीर्घं निःश्वस्य) मया हि पुस्तकादिकं किमपि न पठितम्; अतो मया न ज्ञायते।

माधवदत्त—पश्य, महान्तः पण्डिताः सर्वे एव त्वत्सदृशाः। ते गृहान्न निर्गच्छन्ति।

अमलः—न वहिर्गच्छन्ति?

माधवदत्तः—नहि, विचारय, कदा नु वहिर्गमिष्यन्ति? ते तु केवलं समासीनाः पुस्तकानि पठन्ति। अन्यत्र कुत्रापि नापतति तेषां दृष्टिः। वत्स अमल, परिणते वयसि त्वमपि पण्डितो भविष्यसि। केवलमुपोपविष्टः एतादृशान् विशालान् ग्रन्थान् पठिष्यसि। सर्वे च दृष्ट्वा विस्मयं गमिष्यन्ति।

अमलः—तात, तव चरणयोः पतामि। नाहं पण्डितो भविष्यामि। नाहं पण्डितो भवितुमिच्छामि।

माधवदत्तः—अमल, अर्थहीनं ते वचनम्। पण्डितो यद्यहं भूयां, तदा रक्षितोऽभविष्यम्।

अमलः—यानि कानिचिद् इतस्ततो विद्यन्ते, तानि सर्वाण्येवाहं द्रक्ष्यामि। सर्वं पश्यन्नेव विहरिष्यामि।

माधवदत्तः—श्रुयतां वारमेकम्। किं द्रक्ष्यसि? दर्शनयोग्याणि वा कति विद्यन्ते?

अमलः—अस्माकं गवाक्षान्तिकात् विदूरे यः खलु शैलो दृश्यते, तमुल्लङ्घ्य दूरं गन्तुं प्रबलो मे अभिलाषः।

माधवदत्तः—उन्मत्तस्येव ते वचनम्। किमपि कार्यं प्रयोजनं वा नास्ति। अकस्मान्निष्कारणं शैलमुल्लङ्घ्य, प्रचलामीति, निरर्थकमेतद् वचनम्। पर्वतो यतः प्राकारवत् समुन्नतस्तिष्ठति, अतस्तस्योल्लङ्घनं निपिद्धमेव इत्यर्थो ग्रहणीयः। अन्यथा एतादृशानि विशालानि प्रस्तराणि एकीकृत्य ईदृशेन व्यापारेण किं प्रयोजनमासीद्।

अमलः—तात, किं त्वया मन्यते असौ वारयतीति? अहं तु मन्ये—पृथिवी वाक्यं वाचयितु न शक्नोति, अतस्तेनोपायेन सुनीले गगने हस्तमुत्क्षिप्य आह्वयतीति। ये खलु विदूरवर्तिनो गृहाभ्यन्तरमधिवसन्ति, निःसङ्गास्तेऽपि मध्याह्ने मुक्तगवाक्षपार्श्वमधितिष्ठन्तस्तमाह्वानमाकर्णयन्ति। पण्डिताः किं तन्न शृण्वन्ति?

माधवदत्तः—न ते त्वत्सदृशाः मत्ताः। ते हि श्रोतुमपि नेच्छन्ति।

अमलः—अहं तु गतदिवसे मत्सदृशं मत्तमेकं दृष्टवान्।

माधवदत्तः—किं नु सत्यमेतत्? उच्यतां, शृणोमि तत्।

अमलः—तस्य स्कन्धदेशे एका वेणुयष्टिः। यष्ट्यग्रे बद्धा चैका पोटलिका। वामहस्ते च तस्य एको घटः। पुरातनं ग्राम्यपादुकायुगलं परिधाय अनेन प्रान्तरपथेनासौ शैलाभिमुखं गच्छति स्म। अहं तमाहूय पृष्टवान्—भोः कुत्र त्वया गम्यते? तेनोक्तं—को जानाति—यत्र कुत्रापि। पृष्टं मया—कथं गच्छसि? उक्तं तेन—कार्यान्वेषणाय। भवतु तात, कार्यं किम् अन्वेषणीयम्।

माधवदत्तः—अन्वेषणीयमेव। बहवः कार्यम् अन्विष्यन्तो भ्रमन्ति।

अमलः—उत्तमम्। अहमपि तथैव कार्यमन्विष्यन् भ्रमिष्यामि।

माधवदत्तः—यदि अन्विष्य किमपि न प्राप्यते ?

अमलः—अन्वेषणेन यदि किमपि न प्राप्यते, तदा तु पुनरेव अन्वेषयिष्यामि। ततश्च, असौ ग्राम्यपादुकाधारी जनोऽपक्रान्तः। अहं तु द्वारं निकषा दण्डायमानस्तं निरीक्षमाण एव स्थितः। तत्र यत्र तु उदुम्बरवृक्षस्य अधो निर्झरिणी प्रवहति, तत्रैवासौ भूमौ यष्टिं संस्थाप्य निर्झरिणीजलेण स्वैरं पादौ प्रक्षालितवान्। अनन्तरं पोटलिकामुन्मुच्य सक्तु संगृह्य जलेन संमिश्र्य भक्षयितुमारब्धवान्। भोजने परिसमाप्ते पोटलिकां पुनरपि संबध्य स्कन्धमारोपितवान्। पादयोर्वसनं संकोच्य तस्य निर्झरस्य अन्तरवर्तिसलिलानि विभज्य उत्तीर्य सुष्ठु गतवान्। तेनाहम् आर्यां पितृष्वसारम् उक्तवान् यत् निर्झरसमीपम् गत्वा एकदा सक्तुं भक्षयिष्यामीति।

माधवदत्तः—तत्ते पितृष्वसा किमुक्तवती ?

अमलः—तयोक्तं त्वं निरामयो भव। तदनन्तरं त्वां तन्निर्झरान्तिकं नीत्वा सक्तुं भोजयिष्यामीति। अहो कदाहं निरामयो भविष्यामि ?

माधवदत्तः—वत्स, नास्त्यत्र विलम्बः।

अमलः—विलम्बो नास्ति ? साधु। तर्हि निरामय एवाहं प्रचलिष्यामि।

माधवदत्तः—कुत्र गमिष्यसि ?

अमलः—वक्रगतीनां निर्झराणां जले पादौ निमज्जयन् निमज्जयन् पारमुत्तीर्योत्तीर्य प्रचलिष्यामि। मध्याह्ने सर्वे यदा द्वारं निरुध्य गृहे शयानाः स्थास्यन्ति, तदाहं केवलं कर्मानुसन्धानं कुर्वन् भ्रामं भ्रामं दूराद् दूरान्तरं गमिष्यामि।

माधवदत्तः—भवतु, उत्तमम्। प्रथमतस्तावत् सुस्थो भव, अनन्तरं त्वं—

अमलः—अनन्तरं मां पाण्डित्यार्जने मा उपदिशतु, तात।

माधवदत्तः—तर्हि उच्यतां, किं ते मनसि कल्पितम् ?

अमलः—अधुना किमपि मे मनसि नायाति। भवतु विचिन्त्याहं वक्ष्यामि।

माधवदत्तः—त्वं तु इत्थं यं कमपि वैदेशिकमाहूय तेन सह आलपनं मा कुरु।

अमलः—वैदेशिको मह्यं नितरां रोचते।

माधवदत्तः—यदि त्वां धृत्वा दूरं नयति ?

अमलः—तत्तु उत्तमं भवेत्। मां पुनः कोऽपि धृत्वा न नयति। सर्व एव केवलं निवेशयन्तं निरोधयन्ति।

माधवदत्तः—मम कार्यान्तरमस्ति। तेन मया गम्यते। किन्तु, शृणु वत्स, कदापि वहिर्मागच्छ।

अमलः—नाहं गमिष्यामि। अपि तु तात, पथपार्श्वस्थम एतदेव कक्षमहं अधितिष्ठामि।

२

दधिविक्रेता—दधि! दधि! उत्तमं दधि!

अमलः—दधिविक्रेतः, दधिविक्रेतः! भो! भो! घोषः!

दधिविक्रेता—कथमाह्वयसि? किं दधि क्रेष्यसि?

अमलः—कथं क्रेष्यामि? मम हि अर्थो नास्ति।

दधिविक्रेता—कीदृशः किशोरस्त्वम्। यदि न क्रेष्यसि? तदा कथं मां विलम्बयसि?

अमलः—यदि त्वया साकं गमने मे सामर्थ्यमभविष्यत्, तदाऽहम् अगमिष्यम्।

दधिविक्रेता—मया साकम्?

अमलः—नूनम्। त्वं तु बहुदूराद् विघोषणां कुर्वन् चलितोऽसि। तदाकर्ण्य मनो मे द्रूयते।

दधिविक्रेता—(वीवधं भूमौ संरक्ष्य) वत्स! त्वम् अत्र उपविश्य किं करोषि?

अमलः—वहिर्गमने भिषजा वारितोऽहम्। एषोऽहमखिलं दिवसमत्रैव उपविश्य नयामि।

दधिविक्रेता—अहो, वत्स, किं ते जातम्?

अमलः—नाहं जानामि। मया तु किमपि न पठितम्, अतो मया न ज्ञायते किं मे भूतमिति। दधिविक्रेतः, कुतस्त्वया आगम्यते?

दधिविक्रेता—अस्माकं ग्रामादेव?

अमलः—युष्माकं ग्रामः? किमतीव दूरे युष्माकं ग्रामः?

दधिविक्रेता—पञ्चचूडशैलस्य मूले एवास्माकं ग्रामः। स हि श्यामली-नद्याः पार्श्वत एव।

अमलः—पञ्चचूडशैलः, श्यामली नदी! मन्यते मया—युस्माकम् ग्रामः प्राग् दृष्ट एव। किन्तु कदा दृष्टस्तत्तु स्मर्त्तुं न शक्नोमि।

दधिविक्रेता—अपि दृष्टस्त्वया? तद्धि शैलमूलं कदापि त्वया प्राप्तम्?

अमलः—नहि, न मया कदापि तत्र गतम्। किन्तु, मन्यते, मया तु दृष्ट एव। बहुकालप्राचीनाः ये खलु विशालाः वृक्षास्तेषामेव छायायां युष्माकं ग्रामः कमपि लोहितवर्णं पन्थानमभित एव? न किम्?

दधिविक्रेता—यथार्थमुक्तं त्वया, वत्स।

अमलः—तत्र शैलसानुदेशे गावो विचरन्ति।

दधिविक्रेता—किमाश्चर्यम्। सुष्ठूक्तम्। अस्माकं ग्रामे गावो विचरन्ति, नूनं विचरन्त्येव।

अमलः—रक्ताम्बराश्च ललना नद्याः जलमुत्तोल्य शिरसि कलशान् निधाय प्रचलन्ति।

दधिविक्रेता—साधु, साधु। यथार्थमेवोक्तम्। अस्माकं घोषपल्लीनिवासिन्यो रमण्यः नद्याः जलम् उद्धृत्य नयन्तीति सत्यमेव। परं तास्तु सर्वा एव लोहितनिचोलं परिदधत इति न सत्यम्। यातु वत्स, नूनं कदापि त्वया तत्र भ्रमणार्थं गतमिति मन्ये।

अमलः—दधिविक्रेतः, सत्यमेव मया कथ्यते, मया कदापि तत्र न गतम्। किन्तु, यदा भिषङ् मे बहिर्गमनम् उपदेक्ष्यति, तदा त्वं मां युस्मद्ग्रामं नेष्यसि?

दधिविक्रेता—नेष्यामि वत्स, नूनं त्वां नेष्यामि।

अमलः—शिक्षयिष्यसि मां त्वत्सदृशं दधिविक्रयम्। त्वया यथा तथैव भाण्डदण्डं स्कन्धे निधाय तवानुरूपमेव दूरपथेन गमनम्।

दधिविक्रेता—अहो कष्टम्, कथं दधिविक्रये तव अभिलाषः? कति कति ग्रन्थान् अधीत्य त्वं पण्डितो भविष्यसि।

अमलः—नहि, नहि, नाहं कदापि पण्डितो भविष्यामि। युष्माकं लोहितरागरञ्जितं पन्थानमभितः प्राचीनवटच्छायासु या खलु घोषपल्ली, तत्पल्लीतो दधि समानीय दूराद् दूरान्तरे ग्रामाद् ग्रामान्तरे च दधि विक्रीणन्

परिभ्रमिष्यामि। येन कण्ठेन त्वम् उच्चारयसि तत्स्वरालापनं मां शिक्षय—दधि—दधि—दधि उत्तमं दधीति।

दधिविक्रेता—अहो मे दग्धं ललाटम्। स्वरोच्चयः किमेष शिक्षणीयः?

अमलः—नहि, नहि, तस्य श्रवणे मे प्रीतिरस्ति। आकाशस्य विदूर-प्रान्तात्, विहगकाकलीमाकर्ण्यतो मनो मे यथा उदासीनं भवति, तथा अमुष्मात् पथसंयोगस्थलात् अमुं वृक्षवीथिकामतिक्रम्य यदा तव आह्वान-मागतं, तदा मनसि किमपि अपूर्वभावोद्दीपनं जातम्। अधुना नाहं तत्प्रकाशयितुं क्षमोऽस्मि।

दधिविक्रेता—वत्स, दधिभाण्डमेकं गृहाण।

अमलः—मम तु अर्थो नास्ति।

दधिविक्रेता—न, न, न, न, नहि—अलमर्थेन। यदि त्वं मम दधि पिबसि, तदाहमतीव आनन्दितो भविष्यामि।

अमलः—किं भवतो महान् विलम्बः संघटितः?

दधिविक्रेता—नहि, नहि। न मे विलम्बो जातः न वा क्षतिः। दधिविक्रये कीदृशं सौख्यं, तन्मया त्वत्सकाशादधिगतम्। [प्रस्थानम्]

अमलः—(गीतस्वरेण) दधि, दधि, उत्तमं दधि। तद्धि पञ्चचूडशैलतटे श्यामलीनदीतीरवर्तिघोषगृहाणां दधि। ते हि प्रभातकाले वृक्षतले दण्डायमानां गां दुहन्ति, सायं घोषललना दधिरचनां कुर्वन्ति—तद् दधि, तद्धि-दधि, दधि-द-अ-धि, उत्तमं दधि।

एष प्रहरी पथि विचरति। भोः प्रहरिन्, प्रहरिन्! वारमेकम् इहागत्य श्रुयताम्। प्रहरिन्!

[प्रहरी प्रविशति]

प्रहरी—एवं कथमुच्चैः शब्दापयसि? नास्ति ते मत्सकाशात् भयम्?

अमलः—कथं? कथं त्वत्तो विभेमि?

प्रहरी—यद्यहं त्वां धृत्वा नयामि?

अमलः—कुत्र मां नेष्यसि? किं महति व्यवधाने? अमुं गिरिशिखरम् अतिक्रम्य?

प्रहरी—यदि त्वां राजसमीपमेव नयामि?

अमलः—राजसमीपम्? नय माम्। किन्तु, चिकित्सकेनाहं वर्हिगमनाद्

वारितः। अतः कोऽपि मामन्यत्र बलान्नेतुं न शक्ष्यति। मया अत्रैव केवलं रात्रिन्दिवम् अवस्थातव्यम्।

प्रहरी—चिकित्सकेन वारितोऽसि ? अहो तदेव सत्यम्। मुखमण्डलं ते पाण्डुरं सञ्जातम्। नयनप्रान्ते दृश्यते कृष्णा रेखा। करयोश्च शिरागुच्छं प्रकाशं गच्छति।

अमलः—भोः। प्रहरिन्, किं त्वं घण्टां न वादयिष्यसि ?

प्रहरी—इदानीमपि न जातः समयः।

अमलः—कोऽपि वदति, कालः अतिक्रामतीति। अन्ये कथयन्ति समयो नागत इति। यातु, त्वं घण्टां वादयसि चेत्तदा हि समयो भवेत्।

प्रहरी—कथं तद् भवेत् ? समये समागते हि यथाकालं घण्टां वादयामि।

अमलः—मनोहारिणी तव घण्टा। श्रुतिमधुरो हि तव घण्टाध्वनिर्मम आनन्दं जनयति। द्विप्रहरे सर्वेषां भोजने परिसमाप्ते यदा हि पूजनीयः पितृष्वसृपतिः कार्यप्रसङ्गेन बहिर्गच्छति, आर्या च पितृष्वसा रामायणं पठन्ती निद्रामग्ना भवति, अस्माकं क्षुद्रको गृहसारमेयश्च अङ्गनप्रान्तच्छायायां लाङ्गूलाभ्यन्तरे मुखं संस्थाप्य सुप्तिं गच्छति, तदैव तव घण्टा निनदति ढं, ढं, ढं, ढं ढमिति। तत्कथं ते घण्टा ध्वनति।

प्रहरी—घण्टा सर्वानेवं निर्दिशति—कालः कमपि नापेक्षते, अविरामं कालो गच्छतीति।

अमलः—कालो गच्छति ? कुत्र, कं देशमभिगच्छति ?

प्रहरी—कोऽपि तन्न जानाति।

अमलः—किंतु तत्स्थानं न केनापि दृष्टम् ? कालेन सार्धम् अहमपि तमदृष्टपूर्वं दूरदेशं गन्तुं नितराम् अभिलषामि।

प्रहरी—वत्स, स देशः सर्वैरेव नूनं गन्तव्यः।

अमलः—किं मयापि गन्तव्यः ?

प्रहरी—नूनमेव।

अमलः—किन्तु, भिषङ्महोदयेन बहिर्गमने वारितोऽहम्।

प्रहरी—कदा तु वा भिषग्वरः स्वयं करे धृत्वा नयेत्।

अमलः—नहि नहि, न जानासि तं भिषजम्। स केवलं धृत्वैव रुणद्धि।

प्रहरी—तस्मादपि निपुणतरो यश्चिकित्सकः स हि मोचयति।

अमलः—स मे निपुणश्चिकित्सकः कदा नु आगमिष्यति ? उपविश्य विलम्बनं मे नाधुना रोचते।

प्रहरी—शान्तम्। वत्स, एतादृशं न वक्तव्यम्।

अमलः—नहि, अहं तु उपविष्ट एव, आसनान्न कदापि मया वहिर्गम्यते। किन्तु तवेयं घण्टा निनदति ढं ढं ढंमिति, मनश्च मे अवसीदति। यातु, प्रहरिन्!

प्रहरी—तात ?

अमलः—अमुत्र पथः पुरतो विशाले भवनशीर्षे समुड्डीना पताका, यत्र च जनाः निरन्तरमागच्छन्ति निष्क्रामन्ति च, तत्र किं घटितम् ?

प्रहरी—तत्र नूतनं वार्तागृहं प्रतिष्ठितम्।

अमलः—वार्तागृहम् ? कस्येदम्।

प्रहरी—वार्तागृहमपरस्य कस्य भवति ? एतद्धि राज्ञ एव। बालकोऽयं नूनं कौतुकमुद्दीपयति।

अमलः—राज्ञो वार्तागृहे राजसकाशात् किं सर्वाणि पत्राणि आगच्छन्ति ?

प्रहरी—नूनमागच्छन्ति। पश्य एकदा तवापि नामाङ्कितं पत्रमागमिष्यति।

अमलः—किं ममापि नाम्ना पत्रमागमिष्यति ? अहं तु किशोर एव।

प्रहरी—किशोरानुद्दिश्य राजा ईदृशं क्षुद्रं पत्रं लिखति।

अमलः—तद्धि मे प्रीतिकरं भविष्यति। कदा नु अहं पत्रं प्राप्स्यामि ? मामपि उद्दिश्य तत्र भवान् पत्रं लेखिष्यतीति कथं त्वं जानासि ?

प्रहरी—तन्नाभविष्यत् चेत्, तव उन्मुक्तगवाक्षस्य पुरत एव ईदृशीं विशालां हेमाभां पताकामुद्धूय तत्रभवता कथं वार्तागृहं प्रतिष्ठापितम् ? [ स्वगतम् ] इमं किशोरं प्रति मे प्रीतिः संजायते।

अमलः—भवतु, राजसकाशात् समागते मे पत्रे, कस्तदानीय मह्यं प्रदास्यति ?

प्रहरी—राज्ञस्तु वर्तन्ते बहवो वार्तावाहकाः। सुवर्णनिर्मितं सुगोलमभिज्ञानं वक्षसि सन्धार्य ते विचरन्तीति किं त्वया न दृष्टम्।

अमलः—कुत्र ते विचरन्ति ?

प्रहरी—गृहे गृहे, देशे देशे।

[ स्वगतम् ] अस्य प्रश्न-श्रवणे हास्यं समुत्पद्यते।

अमलः—तर्हि परिणते वयसि अहं राज्ञो वार्तावाहको भविष्यामि।

प्रहरी—हा-हा-हा-हा। वार्तावाहकः। सुमहत् तस्य कार्यम्। रौद्रे, वर्षणे, दीनानां धनिकानां च सर्वेषामेव गृहे पत्रं प्रापयतो विचरणम्! तत्तु कार्यम् आयासकरम्।

अमलः—कथं त्वं हससि? तदेव कार्यं मे सर्वाधिकं रोचते। नहि, नहि, त्वत्कार्यमपि अतीव सुन्दरम्—मध्याह्ने यदा रौद्रमतीव ज्वालामयं भवति तदा ढं, ढं, ढमिति घण्टा ध्वनति, पुनः कस्याञ्चिद् रात्रौ शय्यायाम् अकस्मात् जागरितः पश्यामि, प्रदीपो निर्वाणमाप्तः, वहिर्देशे च तदा घनान्धकारे घण्टा ध्वनति ढं ढं ढमिति।

प्रहरी—अरे। पश्य, असौ मण्डलपतिरागच्छति—तदहमधुना पलायिष्ये। यतस्त्वया सह आलपन्तं मां दृष्ट्वा स मां विपदि निपातयिष्यति।

अमलः—कुत्र मण्डलपतिः, कुत्र कुत्रासौ?

प्रहरी—अमुत्र, विदूरे तिष्ठति। मस्तके तस्य तालपत्र-निर्मितं गोलं विशालं छत्रमेकम्।

अमलः—किं स राज्ञा मण्डलपतिपदे नियुक्तः?

प्रहरी—न हि, स स्वयमेव मण्डलपतिरिव आचरति। किञ्च, यस्तस्मै मानं प्रदातुं नेच्छति, तेन सह अहर्निशम् ईदृशं स विवदते यत् सर्व एव तस्माद् बिभेति। केवलं सर्वैः सह वैरमाचर्य स स्वकार्यं साधयति। यातु, अद्य तावद् गच्छामि, मे कार्यहानिः सञ्जायते। अहं श्वः प्रभाते पुनरागत्य निखिलं नगरसन्देशं त्वां श्रावयिष्यामि।

(प्रस्थानम्)

अमलः—राज्ञः सकाशात् प्रत्यहम् एकैकं पत्रं प्राप्नोमि चेत्, तदैतद् प्रशस्तं भवेत्। एतद्गवाक्षसमीपे समासीनः पठिष्यामि। किन्तु नाहं शक्नोमि पठितुम्। को मम कृते पठिष्यति? पितृष्वसा रामायणं पठति? किन्तु सा किं राजलिपि-पठने समर्था? यदि कोऽपि पठितुं न शक्नोति, तदा पत्राणि सञ्चित्य रक्षिष्यामि, पश्चात् परिणते वयसि पठिष्यामि। किन्तु वार्तावाहको यदि मां न परिजानाति?

भोः मण्डलपतिमहोदय, मण्डलपतिमहोदय, शृणु वाक्यमेकम्—

(मण्डलपतिः प्रविशति)

मण्डलपतिः—कोऽसौ! मार्गमध्ये मां समाह्वयति! वानरकल्पोऽयं कुतः समागतः?

अमलः—त्वं तु मण्डलपतिः। त्वं हि सर्वैरेव मान्यः।

मण्डलपतिः—( प्रसन्नः सन् ) आम्, अथ किं, मां सर्वः सम्मानयति। नितरां सम्मानयन्ति मां सर्वे।

अमलः—राज्ञो वार्तावाहकः किं तव वचनमनुतिष्ठति ?

मण्डलपतिः—नानुतिष्ठन् स किं जीविष्यति ? हुम्, अपालयतस्तस्य का शक्तिः ?

अमलः— ममैव नाम अमल इति वार्तावाहकस्त्वया विज्ञप्तव्यः कथितव्यश्च यदहम् एतद् गवाक्षसमीपे समासीनस्तिष्ठामीति।

मण्डलपतिः—उच्यतां, कथमेतद् ?

अमलः—मम नाम्ना यदि पत्रमागच्छति—

मण्डलपतिः—तव नाम्ना पत्रम् ? कस्त्वां पत्रं लेखिष्यति ?

अमलः—यदि राजा पत्रं लिखति, तदा—

मण्डलपतिः—हा-हा, हा—हा। नायं वालकः स्वल्पाशः ! हा-हा, हा—हा। राजा त्वामुद्दिश्य पत्रं लेखिष्यति ? वाढं, नूनं लेखिष्यति। यतस्त्वं तस्य परमो वान्धवः। कति दिनानि यावत् त्वया सह अदर्शनात् नरपतिः विशीर्णो भवतीति श्रूयते। नास्त्यतो विलम्वः। पत्रं तु अद्यैव श्वो वा आगमिष्यत्येव।

अमलः—मण्डलपते, कथं त्वमेवं कथयसि ? किं त्वं मामभिक्रुध्यसि ?

मण्डलपतिः—अहो त्वयि क्रुद्धो भविष्यामि। नैवं मे साहसम्। यतो राज्ञा सार्धं प्रचलति तव पत्रव्यवहारः। [ स्वगतम् ] माधवदत्तस्य गर्वं पश्यामि। यतस्तेन सञ्चितं किञ्चिदर्थजातम्, अतस्तस्य गृहे अधुना राजमहाराजानां कथां विना नास्ति वार्तान्तरम्, अस्तु, तं समुचितं शिक्षयिष्यामि। तद् भोः वालक ! यथा राजसकाशात् ते पत्रमागच्छति तथाहं करिष्यामि।

अमलः—नहि नहि, त्वया किमपि न करणीयम्।

मण्डलपतिः—कथं रे ? सन्देशं ते राजानमहं विज्ञापयिष्यामि। तदा तु तत्रभवान् विलम्बितुं न शक्ष्यति—युष्माकं सन्देशग्रहणार्थमिदानीमेव रक्षिणं प्रेरयिष्यति ! आश्चर्यं, दूरारोहिणी खलु माधवदत्तस्य स्पर्धा—राजा सर्वं शृणोति चेत्, तस्य शिक्षा समुचिता भविष्यति।

[ प्रस्थानम् ]

अमलः—का त्वमयि नूपुरनिक्वणं कुर्वती प्रचलसि ? क्षणं विलम्बस्व, प्रियभगिनि !

[ बालिका प्रविश्य ]

बालिका—विलम्बने मे किमस्त्यवसरः ? वेला हि प्रचलति ।

अमलः—विलम्बे नास्ति तव अभिलाषः । नास्ति ममापि अत्रोपविश्य कालक्षेपणे कापि इच्छा ।

बालिका—उषःकालस्य तारा इव त्वं प्रतिभासि । उच्यतां तावत् किं ते भूतमिति ?

अमलः किं भूतमिति मया न ज्ञायते । भिषजैव वहिर्गमनाद् वारितोऽहम् ।

बालिका—अहो, एवं चेद् वहिर्मागच्छ, भिषगादेशः पालनीयः, चापल्यं च न प्रदर्शयितव्यम्, तेन जनास्त्वां दुष्ट इति वक्ष्यन्ति । वहिर्दिशि दृष्टिं निक्षिपतस्ते मनो व्याकुलं भवति, तदहम् अर्धोन्मुक्तं द्वारं ते पूर्णं रुणध्मि ।

अमलः—मा, मा, रुन्धि—निरुद्धं ममात्र अपरं सर्वम्, केवलम् एतदेव उन्मुक्तम् । उच्यतां, कासि त्वम्—नाहं त्वां जानामि ।

बालिका—'सुधा' इति मे नाम ।

अमलः—सुधा ?

सुधा—किं त्वया न ज्ञायते यदहमत्रत्य-मालाकारिणी-कन्यकेति ?

अमलः—किं त्वया क्रियते ?

सुधा—पुष्पाण्यवचित्य पुष्पभाजनं सम्पूर्य माल्यं रचयामि । इदानीं कुसुमचयनार्थं चलामि ।

अमलः—पुष्पचयनाय गच्छसि ? एतदर्थमेव हृष्टं ते चरणयुगलम्, यावच्चलसि तावच्च नूपुरौ शब्दायेते "झम् झम् झम्" इति । यद्यहं त्वया सह गन्तुम् अशक्ष्यम्, तदा हि यत्र दृष्टिर्न गच्छति ततः समुच्चशाखातः कुसुमानि अवचित्य तुभ्यमहम् अदास्यम् ।

सुधा—अथ किम् । कुसुमसन्देशं मत्तस्त्वमधिकं जानासि !

अमलः—जानामि । भृशं खलु जानामि । सप्तसहोदरायाश्चम्पायाः कथामहं जानामि । यदि सर्वे मह्यं मुक्तिं ददति, तदाहं गन्तुं शक्नोमि निविड-गहनाभ्यन्तरम् । यत्र मार्गो न दृश्यते, अत्रैवाहं प्रचलेयमिति मन्ये ।

सुकुमारशीर्षशाखायाः पुरोभागे, यत्र मनुयापत्नी उपोपविश्य दोलां करोति, तत्रैवाहं चम्पकरूपेण विकसितुं शक्नोमि। किं तर्हि त्वं मे पारुलनाम्नी अग्रजा भविष्यसि ?

सुधा—कीदृशी ते मतिः। कथमहं पारुलाख्या ते अग्रजा भविष्यामि ? अहं तु शशिमालिन्याः कन्या सुधा। मया तु प्रतिदिनम् एतावन्ति माल्यानि विरच्यन्ते। यद्यहं त्वमिव अत्रोपविश्य कालयापने समर्था अभविष्यम्, तदा भविष्यत् कीदृशो मे आनन्दसन्दोहः।

अमलः—तदा तु निखिलं दिनं किमकरिष्यः ?

सुधा—ममास्ति वणिग्वधूपुत्तलिका, तस्याः विवाहमदास्यम्। ममास्ति पुषीति गृहपालिता विडाली, तया सह,—यातु, अधुना गच्छाम्यहम्, अतिक्रामति वेला, विलम्बे सति पुष्पाणि न प्राप्यन्ते।

अमलः—मया साकमतः क्षणमधिकं कुरु सदालापम्। तेन मे तृप्तिः सञ्जायते।

सुधा—अथ किम्! चापल्यं मा कुरु। शिष्टो बालकः सन् स्थैर्यमवलम्ब्य अत्रैव तिष्ठ। अहमपि पुष्पचयनं समाप्य प्रत्यावर्तनपथे त्वया साकं सुखालापं कृत्वा प्रचलिष्यामि।

अमलः—पुनर्मह्यं पुष्पमेकं प्रदास्यसि ?

सुधा—मूल्येन विना कथं पुष्पं दास्यामि ? मूल्यं तु प्रदातव्यम्।

अमलः—परिणते वयसि मूल्यं ते प्रदास्यामि। कार्यमन्विष्यन्नहं निर्झरमप्युत्तीर्य गमिष्यामि—। तदा तु मूल्यं ते दास्यामि।

सुधा—उदारः कल्पः।

अमलः—त्वं तावत् पुष्पाणि प्रचित्य आगमिष्यसि ?

सुधा—आगमिष्यामि।

अमलः—आगमिष्यसि ?

सुधा—आगमिष्यामि।

अमलः—न मां विस्मरिष्यसि ? अमल इति मे नाम तव स्मरणे स्थास्यति ?

सुधा—नाहं विस्मरिष्यामि। द्रक्ष्यसि, तव नाम मनसि मे स्थास्यत्येव।

[ प्रस्थानम् ]

[ किशोरसंघस्य प्रवेशः ]

अमलः—भ्रातरः, युष्माभिः कुत्र गम्यते। वारमेकम् अत्रैव तिष्ठथ।

किशोराः—वय क्रीडितुं चलामः।

अमलः—भ्रातरः, यूयं किं नामधेयां क्रीडां क्रीडिष्यथ ?

किशोराः—वयं हलकर्षणक्रीड़ाम् आचरिष्यामः।

प्रथमः—( यष्टिं प्रदर्श्य ) इदमस्माकं हलम्।

द्वितीयः—आवां द्वौ वृषभौ भविष्यावः।

अमलः—किमखिलं दिवसं क्रीडिष्यथ ?

किशोराः—नूनम्—अखिलमेव दि-व-स-म्।

अमलः—अनन्तरं सन्ध्यायां नदीतीरेण गृहं प्रत्यागमिष्यथ ?

किशोराः—वाढं, सायमेव प्रत्यावर्तनं कुर्मः।

अमलः—मम कक्षपुरोवर्तिना पथैव प्रत्यागन्तव्यम्, प्रियसुहृदः।

किशोराः—त्वमपि वहिरागच्छ, क्रीडार्थम् आगम्यताम्।

अमलः—भिषङ्महोदयेन वहिर्गमनं मे निषिद्धम्।

किशोराः—भिषक्! भिषजो निषेधस्त्वया मान्यते किम् ?

—चलत, चलत भ्रातरः, अस्माकं विलम्बो भवति।

अमलः—नहि भ्रातरः, मम गवाक्षस्य पुरतः पथि दण्डायमानाः सन्तः क्षणं क्रीडन्तु। अहं तु तत् पश्यामि।

किशोराः—अत्र कैरूपकरणैः क्रीडिष्यामः।

अमलः—अत्र मम सर्वाणि क्रीडनकानि वर्तन्ते। एतानि सर्वाणि युष्माभिर्गृह्यन्ताम्। गृहाभ्यन्तरे एकाकी क्रीडितुं नोत्सहे। तिष्ठन्ति एतानि सर्वाणि धूलिधूसरितानि विक्षिप्तानि च, एतैर्मम किमपि प्रयोजनं नास्ति।

किशोराः—अहो, अपूर्वम्, मनोहराणि क्रीडनकानि, जलयानं खल्विदम्। एषा तु जटिका वृद्धा। भ्रातः किं दृष्टः, कीदृशः सुन्दरः सैनिकः। किम् एतानि सर्वाणि त्वया अस्मभ्यं प्रदीयन्ते ? किं त्वया कष्टं नानुभूयते ?

अमलः—नहि, किमपि कष्टं मया नानुभूयते। सर्वाण्येव युष्मभ्यं प्रदीयन्ते।

किशोराः—न पुनः प्रत्यर्पयिष्यामः।

अमलः—नहि, प्रत्यर्पणं हि करणीयम् ।

किशोराः—न कोऽपि तिरस्करिष्यति ?

अमलः—न कोऽपि, न कोऽपि तिरस्करिष्यति। अपि तु प्रत्यहं प्रभाते यूयम् एभिः क्रीडनकैर्मम द्वारस्य पुरतः किञ्चित्कालं क्रीडन्तु तावत्। किञ्च, सत्सु एतेषु पुरातनेषु भूयो नूतनानि अहमानीय दास्यामि।

किशोराः—शोभनः खलु प्रस्तावः। वयं प्रत्यहमेवात्र क्रीडिष्यामः। भो भ्रातरः, सैनिकान् तावत् सज्जीकुरुत, वयं युद्धं क्रीडिष्यामः। आग्नेयास्त्रं कुत्र प्राप्स्यामः। अहो तत्रैव वर्तते दीर्घं शरदण्डमेकं, तदेव भक्त्वा वयमाग्नेयास्त्रं निर्मामः। किन्तु, भ्रातस्त्वं सुप्तिं गच्छसीति दृश्यते।

अमलः—तथ्यमेव, निद्रा मां दृढमेव बाधते। अन्तरान्तरा कथं निद्रा मामभिभवतीति नाहं जानामि। दीर्घकालं यावदुपविष्टोऽहम्, नाहमतः परम् उपवेष्टुं शक्नोमि, पृष्ठदेशे वेदना जायते।

किशोराः—अधुना प्रहरैकमात्रः समयः। तत् कथं भवति ते निद्रावेशः! श्रूयताम्, प्रथमप्रहरस्य घण्टा ध्वनतीति।

अमलः—सम्यगुक्तम्, एषा घण्टा ध्वनत्येव ढं ढं ढमिति, निद्रार्थं मामाह्वयति।

किशोराः—तर्हि वयमधुना गच्छामः, पुनः श्वः प्रभाते आगमिष्यामः।

अमलः—भ्रातरः, युष्माकं गमनात् प्राक् किञ्चित् पृच्छामि। युष्माभिस्तु वहिरेव स्थीयते, तत् किं राज्ञो वार्तागृहस्य वार्तावाहकान् यूयं जानीथ ?

किशोराः—वाढम्, जानीमः, सुष्ठु जानीमः।

अमलः—के तावत्ते ? कानि तेषां नामानि ?

किशोराः—वादल् इत्येकस्य पत्रवाहकस्य नाम, अपरस्य शरदिति नाम। अन्ये च बहवः सन्ति।

अमलः—यदि मन्नामाङ्कितं पत्रमायाति तदा किं ते परिज्ञातुं मां शक्ष्यन्ति ?

बालकाः—कथं न शक्ष्यन्ति। स्थास्यति चेत् पत्रे लिखितं ते नाम तर्हि निश्चितमेव ते परिज्ञास्यन्ति।

अमलः—श्वः प्रभाते यदा यूयम् आगमिष्यथ, तदा तेषामेकं मत्सकाशमानीय मया परिचयो विधातव्यः।

किशोराः—बाढम्, तथैव करिष्यामः।

( प्रस्थानम् )

३

[ शय्यागतोऽमलः ]

अमलः—तात, किमद्य गवाक्षं निकषापि नाहं गन्तुमर्हामि? किमितोऽपि भिषङ्महोदयेन वारितोऽहम्?

माधवदत्तः—तथैव, वत्स, प्रतिदिनं तत्र आसनावस्थानेन पीडा ते प्रबला सञ्जाता।

अमलः—मैवं तात, नाहं कामपि पीडामनुभवामि। परं तत्रैव स्थितोऽहम् अतीव सुस्थस्तिष्ठामि।

माधवदत्तः—तत्रैव उपविश्य त्वमस्य नगरस्य सर्वप्रान्तीयबालवृद्धैः सार्द्धं प्रीतिबन्धनं रचितवान्—मम द्वारदेशं निकषा नित्यमेव संघटते जनानां मेलन-महोत्सवः। किमेतेन कदापि शरीरं निरामयं भवति? अहो अद्य तावत्ते मुखं कीदृशं पाण्डुरं जातम्!

अमलः—तात, मन्ये, अद्य ममानुरक्त उदासीनो गवाक्षं निकषा माम् अप्राप्य प्रचलिष्यतीति।

माधवदत्तः—कस्तावत् स उदासीनः?

अमलः—सोऽसौ, यः प्रतिदिनं मत्सन्निधानमागत्य नानादिग्देशानां कथां कीर्तयति, तच्छ्रवणेन महती तृप्तिर्मे जायते।

माधवदत्तः—किन्तु, न मया कोऽपि उदासीनो ज्ञायते।

अमलः—इदानीमेव समागतस्तस्य आगमनकालः। तव चरणयोः पतित्वा प्रार्थये, यथा स मे कक्षं प्रविश्य वारमेकं तत्र उपविशेत्—तदेव तस्मै कथ्यताम्।

[ उदासीनवेषेण पितामहस्य प्रवेशः ]

अमलः—अये, अये उदासिन्! आगम्यताम्, मम शय्यायां क्रियताम् आसन-ग्रहणम्।

माधवदत्तः—किमिदम् ? एतत्तु……

पितामहः—( चक्षुर्भ्यामिङ्गितं कृत्वा ) अहमुदासी ।

माधवदत्तः—किं त्वं न भवसीति विचिन्त्यापि नावगच्छामि ।

अमलः—उदासिन्, अस्मिन्नवसरे कुत्र त्वया गतम् ?

पितामहः—क्रौञ्चद्वीपमहं गतवान् । तस्मादिदानीमेव समागतोऽस्मि ।

माधवदत्तः—क्रौञ्चद्वीपम् ?

पितामहः—अलं विस्मयेन । नाहं युष्माभिः समः । मम तु देशान्तर-गमने नास्ति व्ययलेशः । अहं यथाभिमतं गन्तु शक्नोमि ।

अमलः—( करतालिं दत्त्वा ) कीदृशस्तव आनन्दसन्दोहः ! निरामयं गतोऽहं तव शिष्यीकृतो भविष्यामीति, त्वया यदुक्तं, किमधुना तत् स्मर्यते, उदासिन् ?

पितामहः—नितरां स्मरामि। अपि तु भ्रमणार्थम् एतादृशान् मन्त्रान् अहं शिक्षयामि यत् समुद्रे शैले अरण्ये कुत्रापि गमने ते वाधा न भविष्यतीति ।

माधवदत्तः—उन्मत्ताविव किमेवं प्रलपथः ?

पितामहः—वत्स अमल, शैलात् समुद्राद्वा नाहं भीतोऽस्मि । किन्तु, यदि अनेन ते पितृष्वसृपतिना सह भिषड्महोदयोऽपि सम्मिलितो भवति, तदा मे मन्त्राः व्यर्थतां गमिष्यन्ति ।

अमलः—नहि, नहि तात, भिषड्महोदयस्तु त्वया किमपि न वक्तव्यः । अधुनाहमत्रैव शयानः स्थास्यामि, अन्यत् किमपि न करिष्यामि । किन्तु यस्मिन्नु दिवसेऽहं निरामयो भविष्यामि, तस्मिन्नेव दिवसे उदासिनो मन्त्रं गृहीत्वा दूरं प्रचलिष्यामि—शैलाः समुद्राः नद्यो वा मां निरोद्धं न शक्ष्यन्ति ।

माधवदत्तः—मैवं ब्रूहि वत्स । केवलं गमिष्यामि गमिष्यामीति न वक्तव्यम् । तच्छ्रवणेन मनो मे दूयते ।

अमलः—उदासिन्, उच्यतां तावत्, क्रौञ्चद्वीपस्तु कीदृशः ?

पितामहः—अपूर्वः स देशः । स तु विहगानां देशः तत्र नास्ति कोऽपि मनुष्यः । नहि ते वाक्यमुच्चारयन्ति, न चलन्ति, गायन्तः केवलमुड्डीयन्ते ।

अमलः—अहो अपूर्वम् । किं सागरोपान्ते ?

पितामहः—अथ किम् ! सागरोपकूलमेव ।

अमलः—सर्वे शैलाः किं सुनीलाः शोभन्ते ?

पितामहः—नीलेषु शैलशिखरेषु तेषां कुलायाः। सन्ध्यायां शैलशीर्षे अस्ताचलगामिनस्तपनस्य रश्मिषु विकीर्णेषु हरिद्वर्णाः पक्षिणः श्रेणीशस्तेषां कुलायान् प्रत्यागच्छन्ति। तदा हि नभसो रागस्य विहगानाञ्च वर्णस्य शैल-कान्तेश्च अकाण्डे भवति समन्वयः।

अमलः—शैले तावदस्ति निर्झरिणी ?

पितामहः—नूनम्, असत्यां निर्झरिण्यां ननु किं चलति ? सा हि प्रवहति यथैव विगलिता हीरकधारा। अपरञ्च, अपूर्वं तस्याः नृत्यम्। उपलखण्डान् 'ठं ठं ठं ठमिति वादयन्ती केवलं "कल्, कल्, झर्, झर्" रवेण सा हि स्रोतस्विनी सिन्धुवत्तसि आत्मानं वल्गति। कुत्रापि छायायापि तस्याः निरोधे कस्यापि भिषजः पितुरपि सामर्थ्यं नास्ति। यदि पक्षिणस्ते मां तुच्छं मानुषं मत्वा नापंक्तः करिष्यन्, तदाहं तां स्रोतस्विनीं निकषा तेषां सहस्रसंख्यकानां कुलायानां पार्श्वतो नीडं निर्माय समुद्रतरङ्गान् अवलोकयन् समग्रं दिवसं अयापयिष्यम्।

अमलः—पक्षीभूते मयि चेत्—

पितामहः—तदा तु महती समस्या संजनिष्यते। श्रुतं मया यत्त्वया दधिविक्रेता विज्ञप्तो यत् परिणते वयसि त्वं दधि विक्रेष्यसि इति। किन्तु पक्षिषु ते दधिविक्रयकार्यं तादृशं लाभजनकं न स्यात्। मन्ये तेन किञ्चिदिव तवार्थहानिर्भविष्यति।

माधवः—नाहमतः परं शक्नोमि। युवां मामपि उन्मादं करिष्यथ इति मन्ये। गच्छाम्यहम्।

अमलः—तात, दधिविक्रेता मे किमागतः ?

माधवदत्तः—अथ किम्। तव रुचिकरीम् उदासिनः पोटलिकां परिवहन् क्रौञ्चद्वीपस्थितानि पक्षिनीडान्युद्दिश्य उड्डयनेन तस्य उदरं न खलु पूर्यते। स तुभ्यं दधिपूर्णं पात्रमेकमुत्सृज्य प्रस्थितः। उक्तञ्च तेन यत् तेषां ग्रामे तस्य भगिनीकन्यायाः विवाहः। अतः स वंशीवादकमादेष्टुं कलमिपल्लीं गच्छति, तेन च भृशं कर्मव्यग्र इति।

अमलः—एकदा तु तेनोक्तं—मया सार्द्धं तस्य कनिष्ठभागिनेय्याः परिणयं विधास्यतीति ?

पितामहः—तर्हि महतीं समस्यां तर्कयामि।

अमलः—उक्तञ्च तेन यत् सा मे समुज्ज्वला मनोरमा वधूर्भविष्यति। तस्याः नासिकायां नोलकाभरणं, शाटिका च चित्रिता रक्तवर्णा। प्रातः स्वहस्तेन कृष्णां धेनुं सन्दुह्य नवीनमृन्मयपात्रेण सफेनं दुग्धं सा मां पाययिष्यति, सायंकाले प्रदीपं प्रदर्श्य मां निकषा उपविश्य सप्तसहोदराया-श्चम्पायाः कथां कथयिष्यतीति।

पितामहः—अहो, अपूर्वम्, अपूर्वम्। वाञ्छनीया तु वधूः। अहं तावदुदासीनो जनः, ममापि लोभः सञ्जायते। तद्वत्स, नास्ति ते शङ्का-कारणम्। इदानीम् अनुष्ठीयतां विवाहः। सत्यमेतत् त्वां ब्रवीमि—तव प्रयोजने सति तस्य गृहे न कदापि स्वसृकन्याया अभावो भविष्यतीति।

माधवदत्तः—अलमलम्। नातःपरं शक्यते। ( प्रस्थानम् )

अमलः—उदासिन्, पितृष्वसृपतिर्मे तु गत एव। इदानीं मां रहसि कथय, राजसकाशात् मन्नामाङ्कितं पत्रं किं वार्तागृहं सम्प्राप्तम् ?

पितामहः—तत्र भवतः पत्रं तु प्रेषितं चलितमेवेति मया श्रुतम्। तत् पत्रमधुना पथि एव वर्तते।

अमल—पथि ? कस्मिन् पथि ? वर्षणात् निर्मलीभूते नभसि विदूरे यद्दृश्यते, तस्मिन् निविडवनमार्गे ?

पितामहः—त्वया सर्वमेव ज्ञातमिति पश्यामि। अथ किम्! तत्रैव पथि वर्तते ते पत्रम्।

अमलः—उदासिन्, मया तु सर्वमेव ज्ञायते।

पितामहः—तत्तु अवगम्यते। किन्तु केनोपायेन जानासि ?

अमलः—नाहं तज्जानामि। प्रत्यक्षमिव सर्वं मयि प्रतिभाति। मन्ये बहुशो मया दृष्टं सर्वम्, तत्तु अनेकदिनेभ्यः प्रागेव कदा इति नाहं स्मरामि। कथयामि किम् ? अहं पश्यामि—राज्ञो वार्तावाहकः शैलशिखरादेकक एव केवलमवतरति, वामहस्ते तस्य प्रदीपः, स्कन्धे तु पत्रपेटिका। कति दिनानि, कति निशाश्च व्याप्य स केवलमवतरत्येव। गिरिपादं निकषा स्रोतस्विन्याः पन्थाः यत्र शेषं गतः वंकिमनदीमार्गेण—स केवलमायात्येव। यत्र पर्वत-पादमूले निर्झरगति विंलुप्तिं गता तत्र नद्यास्तीरे नीवारक्षेत्रम्—क्षेत्राभ्यन्तरे यः खलु संकीर्णः पन्थास्तेनैव पथा स केवलमागच्छति—ततस्तु इक्षुक्षेत्रम्, तस्य क्षेत्रस्य पार्श्वतो गच्छति समुच्चा संकीर्णा पथरेखा—तेनैव मार्गेण स केवलम्

आयाति—अहर्निशम् एकल एव आयाति क्षेत्रमध्ये रणन्ति झिल्लीकीटाः—नदीतीरे नास्ति कोऽपि मनुष्यः, केवलं पङ्कखनकः पुच्छमान्दोलयन् परिभ्रमति—अहं सर्वमेव पश्यामि। एवम् अनतिक्रमायान्तं तं वीक्षमाणस्य मम वक्षसि समुल्लसति आनन्दसन्दोहः।

पितामहः—नास्ति मे तादृशी नवीना दृष्टिः। तथापि तव दृष्टिमाहात्म्यात् अहमपि अवलोकितु शक्नोमि।

अमलः—भवतु उदासिन्, यस्येदं वार्तागृहम्, अपि नाम जानासि तं राजानम्?

पितामहः—नूनं जानासि। मया तु प्रत्यहमेव भिक्षार्थं तत्समीपं गम्यते।

अमलः—साधु। निरामयः सन् अहमपि तत्सकाशं भिक्षार्थं गमिष्यामि। किं गन्तुं न शक्ष्यामि?

पितामहः—वत्स, नास्ति प्रयोजनं ते भिक्षाकार्येण। तुभ्यं यत् प्रदेयम्, याचनां विनैव स तत् प्रदास्यति।

अमलः—नहि, नहि, तस्य द्वारस्य पुरतः पथि पार्श्वे दण्डायमानः सन् 'जयोऽस्तु" इत्युच्चरन्नहं भिक्षां प्रार्थयिष्ये—खञ्जनिं वादयित्वा नर्तिष्यामि—तत्तु सुष्ठु भविष्यति, न किम्?

पितामहः—वाढम्, नितरां शोभनं भविष्यति। मया साकं त्वां नयामि चेत् ममापि भविष्यति पर्याप्तो भिक्षालाभः। तत् त्वं किं याचिष्यसे?

अमलः—अहं वक्ष्यामि—राजन्, मां भवतः पत्रवहनकर्मणि कृपया नियोजयतु। तर्हि, करे प्रदीपं धारयन् गृहाद् गृहान्तरं तव पत्रं प्रापयन्नहं भ्रमिष्यामि। शृणु उदासिन्, मां कश्चिदुक्तवान्, यन्मयि निरामये सञ्जाते स मां भिक्षाटनं शिक्षयिष्यति। अतोऽहं तेन सह यथेच्छं भिक्षया विहरिष्यामि।

पितामहः—कथ्यताम्; कोऽसौ?

अमलः—छिदाम।

पितामहः—को नु छिदाम।

अमलः—योऽसौ अन्धः खञ्जश्च स एव। स प्रत्यहं मे गवाक्षान्तिकम् आगच्छति। मत्सदृशः कश्चित् किशोरस्तं चक्रयानेन परिभ्रामयति। मयोक्तं सुस्थःसन्नहं तं चालयन् सर्वत्र नेष्यामीति।

पितामहः—तेन नितरामानन्दो भविष्यति ।

अमलः—किञ्च, स एव मामुक्तवान्, केन विधिना भिक्षा करणीया तत् स मां शिक्षयिष्यति। तस्मै भिक्षाप्रदानार्थम् अहं तातमनुरुणध्मि। तत्र भवान् ब्रवीति स मिथ्या-काणः, मिथ्या-खञ्जः, न तु यथार्थतो विकलाङ्गः। भवतु स मिथ्या-काणः, किन्तु दृष्टिहीनः स द्रष्टुं न शक्नोति—एतत्तु सत्यमेव।

पितामहः—यथार्थमुक्तं, वत्स। ननु एतदेव सत्यं यत् स चक्षुर्भ्यां द्रष्टुं न शक्नोति। तं तावत् कोऽपि काणं वदतु न वा, किन्तु यद्यपि भिक्षां न प्राप्नोति, तथाप्यसौ किं कर्त्तुं त्वत्सकाशे उपविशति?

अमलः—कुत्र किं विद्यते तदहं तं श्रावयामि। मन्दभाग्यो वराको द्रष्टुं न शक्नोति। त्वं येषां देशानां वृत्तं मह्यं वर्णयसि,तत् सर्वमहं तं श्रावयामि। तस्मिन् दिवसे भवता यत्तत् लघु-देशकथां कथितवान्—यस्मिन् देशे द्रव्याणां कोऽपि भारो नास्ति, यत्र च लघुप्लुत्या अनायासेनैव पर्वतमतिक्रम्य गन्तुं शक्यते, मन्मुखात् त्वद्वर्णितस्य तस्य लघुदेशस्य कथां श्रुत्वा स भृशम् आनन्दितोऽभवत्। भवतु, उदासिन्, केन पथा स देशो गन्तव्यः?

पितामहः—अस्त्येव अभ्यन्तरे कश्चित् पन्थाः किन्तु तस्य मार्गणं दुष्कर-मेव।

अमलः—असौ मन्दभाग्यस्तु अन्ध एव। सम्भवतः किमपि द्रष्टुं न शक्ष्यति—केवलं भिक्षाटनमेव तेन करणीयम्। एतद् विचिन्त्यासौ विषाद-मापन्नः—अहं तमुक्तवान्, भिक्षार्थं गत्वा त्वं यावत् विस्तरशो भ्रमणसुयोगान् प्राप्नोपि, सर्वे तु तदपि न प्राप्नुवन्ति।

पितामहः—वत्स, गृहावस्थाने कुतस्ते एतादृशं दुःखम्?

अमलः—न, न, नास्ति दुःखम्। प्रागेव यदहं गृहमध्ये निरुद्धस्तदा मया अमन्यत यन्नास्ति दिवसस्य अवसानम्। किन्तु अस्माकं राज्ञो वार्ता-गृहं निरीक्ष्य प्रत्यहमेवाधुना प्रसादमनुभवामि। अत्र उपविशन्तं मामियमेव कल्पना आनन्दयति यत् कस्मिंश्चिद् दिवसे मत्कृते पत्रम् आगमिष्यतीति—एवं विचिन्त्य नितरां प्रमोदितः सन् मौनमवस्थातुं पारयामि।

किन्तु राज्ञः पत्रे किं लिखितं स्थास्यतीति मया न ज्ञायते।

पितामहः—मैतत् ज्ञातमस्तु। तव नाम तु नूनमेव लिखितं स्थास्यति, एतेनैवालम्।

[ माधवदत्तस्य प्रवेशः ]

माधवदत्तः—उच्यतां भोः, युवां द्वौ सम्मिलितौ भूत्वा कामिमां विपदं संघटितवन्तौ ?

पितामहः—कथम् ? किं संघटितम् ?

माधवदत्तः—श्रुतं मया, युष्माभिः प्रचारितमेतत् यद् राजा युष्मभ्यं पत्रं प्रेषयितुं वार्तागृहं स्थापितवानिति ।

पितामहः—तेन किं जातम् ?

माधवदत्तः—अस्माकं मण्डलपतिः पञ्चाननस्तत्सन्देशं राज्ञे निवेद्य नासूचितं पत्रं लिखितवान् ।

पितामहः—सर्वे सन्देशाः राज्ञः श्रुतिपथम् अधिगच्छन्ति इति किमस्माभिर्न ज्ञायते ।

माधवदत्तः—तत् कथं न तूष्णीं भवसि, राजमहाराजानां नाम्ना कथं यदृच्छया एतादृशं वचनमुच्चारयसि ? यूयं मामपि विपन्नं करिष्यथ इति पश्यामि ।

अमलः—उदासिन, किं राजा कोपं करिष्यति ?

पितामहः—कथं क्रुद्धो भविष्यति, कीदृशं कोपं गमिष्यतीति पश्मामि । मत्सदृशमुदासिनं त्वत्सदृशञ्च किशोरं प्रति कोपमवलम्ब्य स कथं राजत्वं नाटयिष्यति तत्तु पश्यामि ।

अमलः—उदासिन्, पश्य, अद्य प्रातरेवारभ्य मम नेत्रयोः समक्षम् अन्तरान्तरम् अन्धकारो घनीभूतो भवति । मन्ये, सर्वः स्वप्नः एव । प्राकाम्येण च मौनमवलम्ब्य स्थातुमिच्छामि । वाक्योच्चारणमपि नेच्छामि । तर्हि राज्ञः पत्रं किं नागमिष्यति ? इदानीमेव यदि एतद् गृहम् अन्यानि च सर्वाणि विलुप्तिं गच्छन्ति तदा—

पितामहः—( अमलमुपवीज्य ) मैवम् । पत्रमद्यैव आगमिष्यति ।

( भिषजः प्रवेशः )

भिषक्—अद्य कीदृशम् अनुभूयते ?

अमलः—भिषङ्महोदय, अद्य खलु परिपूर्णं कल्यमनुभूयते, मन्ये अपगताः सर्वाः वेदनाः ।

भिषक्—( जनान्तिकं माधवं प्रति ) एतत् हास्यं, न तु समीचीनं मन्ये ।

अमुना यदुच्यते, सुस्थतानुभूयते इति तदेव दुर्लक्षणम्। अस्माकं चक्रधरेणोच्यते—

माधवदत्तः—क्षमस्व, भिषङ्महोदयः, तिष्ठतु तावत् चक्रधरदत्तस्य उक्तिः। उच्यतामिदानीं को हि व्यापारः।

भिषक्—मन्ये, नातः परमिमं जीवयितुं शक्यामि। मया तु निषेधो विज्ञापितः। किन्तु, मन्ये, वहिर्देशात्, वायुरिमं स्पृष्टवानिति।

माधवदत्तः—न हि भिषङ्महोदय, नैतत् सत्यम्। अहं तु चतुर्दिग्भ्योऽर्गलया निरुध्य इमं संरक्षितवान्। अस्य वहिर्गमनं मया सर्वथा प्रतिरुद्धम्—द्वारमपि प्रायशो निरुद्धमेव रक्ष्यते।

भिषक्—अकान्डे खल्वद्य कीदृशः कश्चित् वायुप्रवाहोऽनुभूयते। युष्माकं गोपुरद्वारस्य अभ्यन्तरे प्रवलो वायुः हु-हु-रवेण प्रवहतीति मया दृष्टम्। तन्न कदापि समीचीनम्। तद्द्वारं सम्यग् अर्गलावद्धं क्रियताम्। उत, दिवसद्वयं त्रयं वा भवत्वत्र निरुद्धं जनानां गमनागमनम्। यदि कोऽपि आगच्छति, तदा तु तदर्थं पश्चाद्द्वारमस्ति। गवाक्षेणामुना सूर्यास्तस्य या खलु आभा आयाति, सापि निरुध्यताम्। सा तु रोगिणं जागरयति।

माधवदत्तः—अमलश्चक्षुषी निमील्य तिष्ठति, मन्ये असौ निद्राति। अस्य मुखमवलोक्य, मन्ये, भिषङ्महोदय, यो न खलु स्वकीयस्तमहम् स्वभवनमानीय स्थापितवान्, स्नेहेन च पालितवान्। मन्ये अतः परं तमहं रक्षितुं न शक्यामि।

भिषक्—किमिदम्! मन्डलपतिस्तवैव गृहमागच्छति। कोऽयं विपत्-पातः। तद् भ्रातः, अहं प्रचलामि। किन्तु त्वम् अधुनैव सम्यग् द्वारं निरुन्धि। अहं गृहं गत्वा अचिरेणैव विषवटिकामेकां प्रेषयामि, सैव प्रयोक्तव्या। रक्षणीये सति सा एव रक्षितुं शक्यति।

[ माधवदत्तस्य भिषजश्च प्रस्थानम् ]

[ मण्डलपतेः प्रवेशः ]

मण्डलपतिः—रे अर्भक, किम्?

पितामहः—( तूर्णमुत्थाय दण्डायमानं सन् ) अहो, अहो, मौनं, मौनमवलम्बस्व।

अमलः—न हि उदासिन, अहं स्वपिमीति त्वं मन्यसे, नाहं सुप्तः। मया सर्वमेव श्रूयते। अहं तु विदूरस्य कथनं शृणोमीव। मम जननी तातश्च शय्याशीर्षे मे आलपत इव भाति।

( माधवदत्तस्य प्रवेशः )

मण्डलपतिः—भोः माधवदत्त, अद्यत्वे तु अतिप्रख्यातैर्महद्भिर् लोकैः सह युष्माकं सम्बन्धो दृश्यते।

माधवदत्तः—किमुच्यते भवता, महात्मन्, अलमनेन परिहासेन। वयं नितरां नगण्यजनाः!

मण्डलपतिः—युष्माकमयं किशोरस्तु राज्ञः पत्रमपेक्षते।

माधवदत्तः—एवं बोधहीनश्चासौ बालकः, तस्य वचनं किं ग्रहणीयम्?

मण्डलपतिः—नहि, नहि, किमत्र विस्मयकारणम्? युष्मद्सदृशम् ईदृशं सुयोग्यं गृहं राजा तु कुत्र प्राप्स्यति? तदर्थमेव युष्माकं गवाक्षस्य पुरत एव राज्ञो नूतनं वार्तागृहं प्रतिष्ठितमिति किं न दृश्यते? अरे, अर्भक, राजसकाशात् तव नामाङ्कितं पत्रं तु आगतमेव।

अमलः—( चकितः सन् ) सत्यम्?

मण्डलपतिः—किमेतत् मिथ्या भवति? त्वयैव साकं राज्ञो बन्धुत्वम्—( अक्षरशून्यं किञ्चित् पत्रं प्रदाय ) हा, हा, हा, एतदेव तत्रभवतः पत्रम्?

अमलः—मा मामुपहस। उदासिन्, उदासिन्, त्वमेव कथय किमिदं तत्रभवतः पत्रम्?

पितामहः—बाढं वत्स, अहमुदासी त्वां ब्रवीमि, तस्यैव पत्रमिदं सत्यमेव।

अमलः—परमहमत्र किमपि न पश्यामि। नेत्राभ्यामद्य सर्वं शुभ्रमेव पश्यामि। मण्डलपतिमहोदय, उच्यतामस्मिन् पत्रे किं लिखितमिति।

मण्डलपतिः—राज्ञा लिखितम्, अद्य श्वो वा युष्माकं गृहं मयागम्यते, मदर्थं युष्माकं सुमिष्टभर्जिततण्डुलैः लाजैश्च भोज्यं प्रस्तूय संरक्ष्यताम्। राजभवनम् अधुना मे क्षणमपि न रोचते। हा, हा, हा, हा।

माधवदत्तः—( कपोतहस्तं विधाय ) महात्मन्, क्षम्यताम्, एभिर्वचनैः परिहासो न हि करणीयः।

पितामहः—परिहासः? कस्य परिहासः? परिहसितुं किं तत्रभवतः शक्तिरस्ति?

माधवदत्तः—भोः पितामह, किं त्वमपि मत्त

पितामहः—बाढं क्षिप्तोऽहम्, तेनैव अस्मि

पश्यामि। राज्ञा लिखितम्, तत्र भवान् स्वयमे

तस्य राजवैद्यमपि सहैव आनयतीति।

अमलः—उदासिन्, तस्य वाद्यं ध्वनति, किं न

मण्डलपतिः—हा हा हा हा। किञ्चिद

तत्र भवान् न श्रोष्यति।

अमलः—मण्डलपतिमहोदय, मया तु अनुमित

त्वं मयि न स्निह्यसीति। त्वं सत्यमेव राज्ञः

चिन्तितम्। अतः क्षम्यतां, देहि मे तव पादरजां

मण्डलपतिः—यातु, अस्य बालकस्य श्रद्धा भ

तस्य बुद्धिस्तथापि तस्य मनस्तु निर्मलमेव।

अमलः—व्यतीतं तु प्रहरचतुष्टयमिति मन्ये।

ढमिति। किन्तु उदासिन्, सन्ध्यातारा: किमुदयं

न शक्नोमि ?

पितामहः—ते तु गवाक्षं रुद्धं कृतवन्तः, अहं त

( वहिर्देशे द्वारे कराघातः

माधवदत्तः—किमिदम्! कोऽसौ ? कोऽयमुत्

वहिर्देशात्—द्वारमुन्मोचय।

माधवदत्तः—के यूयम् ?

वहिर्देशात्—द्वारमुन्मोचय।

माधवदत्तः—मण्डलपतिमहोदय, किं नायं दस्

मण्डलपतिः—रे, रे, के यूयम् ? मण्डलपति

मनसि किं भीतिर्नास्ति ? पश्यतु तावत् शब्दः स्त

कण्ठस्वरे नास्ति रक्षा, यथा तथा शक्तिशाली दस्यु

माधवदत्तः—( गवाक्षपथे मुखं वहिः प्रसारयन्

नाधुना शब्दः।

( राजदूतस्य प्रवेशः )

राजदूतः—अद्यैव महाराजः समागमिष्यति।

मण्डलपतिः—कोऽयं सर्वनाशः।

अमलः—कियद् गभीरायां रजन्यामसौ आगमिष्यति।

अमलः—यदा मे बान्धवः प्रहरी नगरसिंहद्वारस्य घण्टां वादयिष्यति ढं, ढं, ढं……तदा ?

दूतः—बाढं, तदैव। राज्ञा किशोरबान्धवस्य दर्शनार्थं तस्य निपुणतमो भिषक्प्रधानः प्रेषितः।

[ राजवैद्यस्य प्रवेशः ]

राजवैद्यः—किमिदम्। चतुर्दिक्षु सर्वमेव रुद्धम्। मोचय! मोचय! यानि यानि द्वाराणि गवाक्षाणि च विद्यन्ते, तानि सर्वाणि उन्मोचय।

( अमलस्य गात्रं हस्तेन परामृश्य )

वत्स, कीदृशमनुभूयते ?

अमलः—अत्युत्तमम्, अत्युत्तमम्, भिषङ्महोदय, अधुना नास्ति मे कापि पीडा, नास्ति कापि व्यथा। अहो सर्वम्—उन्मुक्तम्—सर्वानेव तारागणान् पश्यामि। तमसः परस्तात् शोभमाना निखिला नक्षत्रमण्डली मया दृश्यते।

राजवैद्यः—अर्धरात्रे यदा राजा आगमिष्यति, तदा त्वं शयनात् समुत्थाय, तेन सार्धं वहिर्गन्तुं किं शक्ष्यसि ?

अमलः—अलमलमहं शक्ष्यामि। वहिर्गमनेनाहं जीविष्यामि। अहं राजानं निवेदयिष्यामि—तिमिराच्छन्नेऽस्मिन्नाकाशे ध्रुवतारां मां प्रदर्शयतु, मन्ये कतिवारानहं तां तारां दृष्टवान्, का हि सेति नाभिजानामि।

राजवैद्यः—तत्र भवान् सर्वाण्येव परिज्ञापयिष्यति ( माधवं प्रति ) कक्षमिदं राज्ञः प्रत्युद्गमनार्थं परिष्कृत्य पुष्पैः सज्जीक्रियताम्। ( मण्डलपतिं निर्दिश्य ) कक्षेऽस्मिन्नसौ जनो न कदापि रक्षणीयः।

अमलः—नहि, नहि, भिषग्वर्य, स मे बान्धवः, यूयं यदा नागतास्तदा तेनैव राज्ञः पत्रमानीय मह्यं प्रदत्तम्।

राजवैद्यः—भवतु वत्स, यतोऽयं ते बान्धवस्तदासावपि कक्षेऽस्मिन् तिष्ठतु।

माधवदत्तः—( अमलस्य कर्णे ) वत्स, राजा त्वयि स्निह्यति, तत्रभवान् स्वयमद्य आगमिष्यति—अद्य तत्सकाशे किञ्चित् प्रार्थयितव्यम्। अस्माकमवस्था तु नहि समीचीना। सर्वं त्वया ज्ञातमेव।

अमलः—तन्मया स्थिरीकृतम्, तात, अस्मिन् विषये नास्ति ते किमपि चिन्ताकारणम् ।

माधवदत्तः—तत् किं स्थिरीकृतं वत्स ?

अमलः—अहं तत्रभवतः समीपे प्रार्थयिष्ये, तत्रभवान् मां तस्य वार्तागृहस्य वार्तावाहकं करोतु । अहं देशाद्देशान्तरं गृहाद् गृहान्तरं तत्रभवतः पत्राणि प्रापयन् विचरिष्यामि ।

माधवदत्तः—( ललाटे कराघातं कृत्वा ) हन्त मे दौभार्ग्यम् !

अमलः—तात, राजा आगमिष्यति, तदर्थं किं भोज्यं विरचिष्यसि ?

दूतः—तत्रभवता तु उक्तमेव, युष्माकमत्र भर्जिततण्डुलैः सगुडलाजैश्च तत्रभवता भोज्यं प्रकल्पितम् ।

अमलः—भर्जिततण्डुलम् ? सगुडलाजादिकम् ? मण्डलपतिमहोदय, त्वया एतदेव प्रागेवोक्तम् यद् राज्ञः सर्वमेव वृत्तं त्वयैव ज्ञायते । प्राक् किञ्चिदपि नास्माभिः परिज्ञातम् ।

मण्डलपतिः—यदि मम गृहे कमपि जनं प्रेरयसि, तदा तु राज्ञे किञ्चिदुत्तमम्—

राजवैद्यः—अलं तेन । नास्ति किमपि प्रयोजनम् । इदानीं यूयं सर्वे स्थिरीभवत । आयाति, आयाति, तस्य सुप्तिः समायाति । बालकस्य शयनोपान्ते अहमुपविशामि—अस्य निद्रावेशो भवति । प्रदीपस्य आलोकं निर्वापय । अधुना आकाशस्य तारकासकाशादागच्छतु आलोकः । अयं हि निद्राविष्टः ।

माधवदत्तः—( पितामहं प्रति ) पितामह, कथं त्वमित्थं मूर्तिरिव कृताञ्जलिर्मौनमवलम्बसे ? कीदृशी शङ्का मे जायते । किमेतानि दृश्यमानानि सुलक्षणानि ? कथमेते कक्षं मे तमसाच्छन्नं कुर्वन्ति ? तारकालोकेन किं मे प्रयोजनम् ?

पितामहः—अविश्वासिन्, तूष्णीं भव । मा वाक्यमुच्चारय ।

[ सुधायाः प्रवेशः ]

सुधा—अमल ।

राजवैद्यः—सुप्तिं गतश्चैषः ।

अमलः—न हि उदासिन, अहं स्वपिमीति त्वं मन्यसे, नाहं सुप्तः। मया सर्वमेव श्रूयते। अहं तु विदूरस्य कथनं शृणोमीव। मम जननी तातश्च शय्याशीर्षे मे आलपत इव भाति।

( माधवदत्तस्य प्रवेशः )

मण्डलपतिः—भोः माधवदत्त, अद्यत्वे तु अतिप्रख्यातैर्महद्भिर् लोकैः सह युष्माकं सम्बन्धो दृश्यते।

माधवदत्तः—किमुच्यते भवता, महात्मन्, अलमनेन परिहासेन। वयं नितरां नगण्यजनाः!

मण्डलपतिः—युष्माकमयं किशोरस्तु राज्ञः पत्रमपेक्षते।

माधवदत्तः—एवं बोधहीनश्चासौ बालकः, तस्य वचनं किं ग्रहणीयम्?

मण्डलपतिः—नहि, नहि, किमत्र विस्मयकारणम्? युष्मद्सदृशम् ईदृशं सुयोग्यं गृहं राजा तु कुत्र प्राप्स्यति? तदर्थमेव युष्माकं गवाक्षस्य पुरत एव राज्ञो नूतनं वार्तागृहं प्रतिष्ठितमिति किं न दृश्यते? अरे, अर्भक, राजसकाशात् तव नामाङ्कितं पत्रं तु आगतमेव।

अमलः—( चकितः सन् ) सत्यम्?

मण्डलपतिः—किमेतत् मिथ्या भवति? त्वयैव साकं राज्ञो बन्धुत्वम्—( अक्षरशून्यं किञ्चित् पत्रं प्रदाय ) हा, हा, हा, एतदेव तत्रभवतः पत्रम्?

अमलः—मा मामुपहस। उदासिन्, उदासिन्, त्वमेव कथय किमिदं तत्रभवतः पत्रम्?

पितामहः—बाढं वत्स, अहमुदासी त्वां ब्रवीमि, तस्यैव पत्रमिदं सत्यमेव।

अमलः—परमहमत्र किमपि न पश्यामि। नेत्राभ्यामद्य सर्वं शुभ्रमेव पश्यामि। मण्डलपतिमहोदय, उच्यतामस्मिन् पत्रे किं लिखितमिति।

मण्डलपतिः—राज्ञा लिखितम्, अद्य श्वो वा युष्माकं गृहं मयागम्यते, मदर्थं युष्माकं सुमिष्टभर्जिततण्डुलैः लाजैश्च भोज्यं प्रस्तूय संरक्ष्यताम्। राजभवनम् अधुना मे क्षणमपि न रोचते। हा, हा, हा, हा।

माधवदत्तः—( कपोतहस्तं विधाय ) महात्मन्, क्षम्यताम्, एभिर्वचनैः परिहासो न हि करणीयः।

पितामहः—परिहासः? कस्य परिहासः? परिहसितुं किं तत्रभवतः शक्तिरस्ति?

माधवदत्तः—भोः पितामह, किं त्वमपि मत्ततां गच्छसि ?

पितामहः—वाढं क्षिप्तोऽहम्, तेनैव अस्मिन् सर्वशुभे पत्रे अक्षराणि पश्यामि। राज्ञा लिखितम्, तत्र भवान् स्वयमेव अमलं द्रष्टुमागच्छति। तस्य राजवैद्यमपि सहैव आनयतीति।

अमलः—उदासिन्, तस्य वाद्यं ध्वनति, किं न श्रूयते ?

मण्डलपतिः—हा हा हा हा। किञ्चिदधिकतरां क्षिप्ततामगच्छन् तत्र भवान् न श्रोष्यति।

अमलः—मण्डलपतिमहोदय, मया तु अनुमितं, त्वं मां प्रति कुपितः—त्वं मयि न स्निह्यसीति। त्वं सत्यमेव राज्ञः पत्रमानेष्यसीति मया न चिन्तितम्। अतः क्षम्यतां, देहि मे तव पादरजांसि।

मण्डलपतिः—यातु, अस्य वालकस्य श्रद्धा भक्तिश्च वर्तेते। यद्यपि नास्ति तस्य बुद्धिस्तथापि तस्य मनस्तु निर्मलमेव।

अमलः—व्यतीतं तु प्रहरचतुष्टयमिति मन्ये। शृणोमि तावत् ढं, ढं, ढं ढमिति। किन्तु उदासिन्, सन्ध्यातारा: किमुदयं गताः। तत्तु कथमहं द्रष्टुं न शक्नोमि ?

पितामहः—ते तु गवाक्षं रुद्धं कृतवन्तः, अहं तावदुन्मोचयामि।

( वहिर्देशे द्वारे कराघातः )

माधवदत्तः—किमिदम्! कोऽसौ ? कोऽयमुत्पातः ?

वहिर्देशात्—द्वारमुन्मोचय।

माधवदत्तः—के यूयम् ?

वहिर्देशात्—द्वारमुन्मोचय।

माधवदत्तः—मण्डलपतिमहोदय, किं नायं दस्युसमागमः ?

मण्डलपतिः—रे, रे, के यूयम् ? मण्डलपतिः पञ्चाननोऽहम्। युष्माकं मनसि किं भीतिर्नास्ति ? पश्यतु तावत् शब्दः स्तब्धीभूतः। श्रुते पञ्चाननस्य कण्ठस्वरे नास्ति रक्षा, यथा तथा शक्तिशाली दस्युर्भवतु वा।

माधवदत्तः—( गवाक्षपथे मुखं वहिः प्रसारयन् ) द्वारं हि भग्नम्, अतो नाधुना शब्दः।

( राजदूतस्य प्रवेशः )

राजदूतः—अद्यैव महाराजः समागमिष्यति।

मण्डलपतिः—कोऽयं सर्वनाशः।

अमलः—कियद् गभीरायां रजन्यामसौ आगमिष्यति।

अमलः—यदा मे बान्धवः प्रहरी नगरसिंहद्वारस्य घण्टां वादयिष्यति ढं, ढं, ढं……तदा ?

दूतः—बाढं, तदैव। राज्ञा किशोरबान्धवस्य दर्शनार्थं तस्य निपुणतमो भिषक्प्रधानः प्रेषितः।

[ राजवैद्यस्य प्रवेशः ]

राजवैद्यः—किमिदम्। चतुर्दिक्षु सर्वमेव रुद्धम्। मोचय! मोचय! यानि यानि द्वाराणि गवाक्षाणि च विद्यन्ते, तानि सर्वाणि उन्मोचय।

( अमलस्य गात्रं हस्तेन परामृश्य )

वत्स, कीदृशमनुभूयते ?

अमलः—अत्युत्तमम्, अत्युत्तमम्, भिषङ्महोदय, अधुना नास्ति मे कापि पीडा, नास्ति कापि व्यथा। अहो सर्वम्—उन्मुक्तम्—सर्वानेव तारागणान् पश्यामि। तमसः परस्तात् शोभमाना निखिला नक्षत्रमण्डली मया दृश्यते।

राजवैद्यः—अर्धरात्रे यदा राजा आगमिष्यति, तदा त्वं शयनात् समुत्थाय, तेन सार्धं वहिर्गन्तुं किं शक्ष्यसि ?

अमलः—अलमलमहं शक्ष्यामि। वहिर्गमनेनाहं जीविष्यामि। अहं राजानं निवेदयिष्यामि—तिमिराच्छन्नेऽस्मिन्नाकाशे ध्रुवतारां मां प्रदर्शयतु, मन्ये कतिवारानहं तां तारां दृष्टवान्, का हि सेति नाभिजानामि।

राजवैद्यः—तत्र भवान् सर्वाण्येव परिज्ञापयिष्यति ( माधवं प्रति ) कक्षमिदं राज्ञः प्रत्युद्गमनार्थं परिष्कृत्य पुष्पैः सज्जीक्रियताम्।
( मण्डलपतिं निर्दिश्य ) कक्षेऽस्मिन्नसौ जनो न कदापि रक्षणीयः।

अमलः—नहि, नहि, भिषग्वर्य, स मे बान्धवः, यूयं यदा नागतास्तदा तेनैव राज्ञः पत्रमानीय मह्यं प्रदत्तम्।

राजवैद्यः—भवतु वत्स, यतोऽयं ते बान्धवस्तदासावपि कक्षेऽस्मिन् तिष्ठतु।

माधवदत्तः—( अमलस्य कर्णे ) वत्स, राजा त्वयि स्निह्यति, तत्रभवान् स्वयमद्य आगमिष्यति—अद्य तत्सकाशे किञ्चित् प्रार्थयितव्यम्। अस्माक-मवस्था तु नहि समीचीना। सर्वं त्वया ज्ञातमेव।

अमलः—तन्मया स्थिरीकृतम्, तात, अस्मिन् विषये नास्ति ते किमपि चिन्ताकारणम् ।

माधवदत्तः—तत् किं स्थिरीकृतं वत्स ?

अमलः—अहं तत्रभवतः समीपे प्रार्थयिष्ये, तत्रभवान् मां तस्य वार्तागृहस्य वार्तावाहकं करोतु । अहं देशाद्देशान्तरं गृहाद् गृहान्तरं तत्रभवतः पत्राणि प्रापयन् विचरिष्यामि ।

माधवदत्तः—( ललाटे कराघातं कृत्वा ) हन्त मे दौभार्ग्यम् !

अमलः—तात, राजा आगमिष्यति, तदर्थं किं भोज्यं विरचिष्यसि ?

दूतः—तत्रभवता तु उक्तमेव, युष्माकमत्र भर्जिततण्डुलैः सगुडलाजैश्च तत्रभवता भोज्यं प्रकल्पितम् ।

अमलः—भर्जिततण्डुलम् ? सगुडलाजादिकम् ? मण्डलपतिमहोदय, त्वया एतदेव प्रागेवोक्तम् यद् राज्ञः सर्वमेव वृत्तं त्वयैव ज्ञायते । प्राक् किञ्चिदपि नास्माभिः परिज्ञातम् ।

मण्डलपतिः—यदि मम गृहे कमपि जनं प्रेरयसि, तदा तु राज्ञे किञ्चिदुत्तमम्—

राजवैद्यः—अलं तेन । नास्ति किमपि प्रयोजनम् । इदानीं यूयं सर्वे स्थिरीभवत । आयाति, आयाति, तस्य सुप्तिः समायाति । बालकस्य शयनोपान्ते अहमुपविशामि—अस्य निद्रावेशो भवति । प्रदीपस्य आलोकं निर्वापय । अधुना आकाशस्य तारकासकाशादागच्छतु आलोकः । अयं हि निद्राविष्टः ।

माधवदत्तः—( पितामहं प्रति ) पितामह, कथं त्वमित्थं मूर्तिरिव कृताञ्जलिर्मौनमवलम्बसे ? कीदृशी शङ्का मे जायते । किमेतानि दृश्यमानानि सुलक्षणानि ? कथमेते कक्षं मे तमसाच्छन्नं कुर्वन्ति ? तारकालोकेन किं मे प्रयोजनम् ?

पितामहः—अविश्वासिन, तूष्णीं भव । मा वाक्यमुच्चारय ।

[ सुधायाः प्रवेशः ]

सुधा—अमल ।

राजवैद्यः—सुप्तिं गतश्चैषः ।

सुधा—मया तु तदर्थं कुसुमनिकरमानीतम्। किं तस्य करतले उपहर्तुं न शक्ष्यामि ?

राजवैद्यः—वाढं, प्रदीयन्तां कुसुमानि।

सुधा—कदायं जागरिष्यति ?

राजवैद्यः—अधुनैव। यदा हि राजा समागत्य तम् आह्वयिष्यति, तदैव।

सुधा—तदा किं यूयम् अस्य कर्णे वचनमेकमुच्चैरुच्चारयिष्यथ ?

राजवैद्यः—किं वक्ष्यामि ?

सुधा—उच्यतां यत्—"सुधा त्वां न विस्मृतवतीति"।

रवीन्द्रजन्मशतवार्षिकीसमुत्सवे "वार्तागृह"स्याभिनये अन्तिमदृश्यम्। वामत :— डः अशोकचट्टोपाध्यायः (पितामहः)
डः विमलकृष्ण मतिलालः ( मण्डलपतिः ), डः ध्यानेशनारायण चक्रवर्ती ( राजकविराजः ),
अध्यापकः श्रीरवीन्द्रनाथ भट्टाचार्यः ( माधवदत्तः )।
शय्यागता— श्रीमती नन्दिनी साधु ( अमलः )

## LIST OF PARTICIPANTS

On stage in different places and in All India Radio, Calcutta. 23rd May, 1961—University Institute Hall, Tagore Cent. Citizen's Conf. ; Subsequent staging :—1st July, 1961—26th Session All India Sanskrit Sahitya Sammelan 16th Sept. 1962—46th Anniversary and on many other occasions.

Prof, Dr. Govindagopal Mukhopadhyaya
,, ,, Siddheswar Chattopadhyaya
Sri Brajendra Kishore Bhattacharya (Now deceased)
Pt. Madhusudan Kavyatirtha
Prafulla Pal (Now deceased)
Prof. Dr. Heramba Chattopadhyaya
Prof. Rabindranath Bhattacharya
,, Dr. Gopikamohan Bhattacharya (Now deceased)
,, ,, Asoke Chattopadhyaya
,, ,, Satya Ranjan Bandyopadhyaya
,, Sri Saktiprasad Mukhopadhyaya I.R.S
Prof. Dr. Bimalkrishna Matilal (Now at Oxford)
Prof. Dr. Pratap Bandyopadhya
Prof. Prabhash Phadikar (Now Honourable Minister)
Prof. Dr. Ramaprasad Bhattacharya
Prof. Dr. Manabendu Bandyopadhyaya
,, ,, Dipak Ghosh
,, ,, Dipak Chattopadhyaya
Sri Chiranjeev Bhattacharya
,, Mihir Bhattacharya
,, Shyamal Chakrabarti
,, Ranjan Chattopadhyya
,, Devabrata Mitra
,, Subrata Mitra
,, Basudev Bhattacharya
&
Sm. Madhuri Mukhopadhyaya (Now deceased)
Prof. Krishna Sadhu
Prof. Jayatri Sanyal
Sm. Nandini Sadhu
Sm. Sudhakshina Mukhopadhyaya

Sm. Rupalekha Basu
Sm. Hena Mazumdar
&
Prof. Dr. Dhyanesh Narayan Chakrabarti

Advisers—Ācārya Dr. Gaurinath Shastri, Prof. Dr. Kalikumar Datta.
Sm. Srimati Tagore. (Now deceased)